# परमार्थसुधा

( त्रैमासिक-संस्कृत-पत्रिका )

वर्षस्तृतीयः * अङ्को द्वितीयः

पौष–माघ–फाल्गुनमासाः

संवत्सरः-२०३५

सम्पादकः — डॉ० सत्यनारायणशर्मा

सहसम्पादकः — श्रीवासुदेवद्विवेदी शास्त्री

प्रकाशकः

**श्रीसोहनलालः**

मन्त्री, परमार्थन्यासः

मुडहू, राँची ( विहार )

प्राप्तिस्थानं, पत्र-लेख-मूल्यादि-प्रेषणसङ्केतश्च—

**श्रीविद्याधरद्विवेदी**

व्यवस्थापकः – परमार्थसुधा

सार्वभौम-संस्कृत-प्रचार-कार्यालयः

डी० ३८।११०, हौजकटोरा, वाराणसी

( उत्तर-प्रदेशः ), दूरभाषः – ६६०२१

वार्षिकं मूल्यम्—दश रूप्यकाणि

विदेशेषु – दश डालराणि

मुद्रकः

वैजनाथ प्रसाद

**कल्पना प्रेस**

रामकटोरा रोड, वाराणसी ।

# विषया लेखकाश्च

## परमार्थसूक्तयः

### ऋतस्य महत्त्वम्

( १ )

मधु वाता ऋतायते
मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः ॥

( २ )

मधुनक्तमुतोषसो
मधुमत्पार्थिवं रजः।
मधुद्यौरस्तु नः पिता ॥

( ३ )

मधुमान्नो वनस्पति—
र्मधुमाँ अस्तु सूर्यः।
माध्वीर्गावो भवन्तु नः ॥

—ऋग्वेदात् १—९१
( शुक्लयजुर्वेदेऽपि )

# प्रातिशाख्यानां कालः

डॉ० सत्यनारायणशर्मा

(१)

प्रातिशाख्यानां प्रणयनकालः कथं ज्ञायते ? ऐतिह्योपयोगिसाधनानामभावाद् दुःशकोऽयं प्रयासः । कतर आसीत् प्राक्तनो वैयाकरणः पाणिनिर्वाजसनेयिप्रातिशाख्यप्रणेता कात्यायनो वा ? ऋग्वेदस्य प्रातिशाख्यस्य वाजसनेयिसंहितायाः प्रातिशाख्यस्य च पाणिनीयसूत्रैः कथं विधः सम्बन्धः पुराकालेऽविद्यत इति प्रश्नानां गरिमाऽनुसन्धातृभ्यो विवादास्पदं नास्ति । किन्तु तान् सदाढर्यं प्रतिवक्तुं सुधियो नोत्सहन्ते । विदुषां मतानि अत्र विषये यदि भिद्यन्ते तर्हि किमाश्चर्यम् ! ऋक्प्रातिशाख्यस्य वाजसनेयिप्रातिशाख्यस्य च मुद्रितानि पुस्तकानि ऊनविंशतिशताब्द्या मध्यभागेऽपि प्रतीच्ये जगति समुपलभ्यन्ते स्म । ऋक्प्रातिशाख्यं जर्मनदेशीयवाचि अनूद्य आचार्यमोक्षमूलरो लाइप्सिनगरतो विगतशतकस्य द्वितीयपरार्धे विद्वन्मण्डले प्रसिद्धीकृतवान् । सामवेदस्योत्तरगानस्य पुष्पसूत्राभिधं प्रातिशाख्यं विंशशतकस्यौषसि जर्मनभाषायामनूद्य आरः सीमन्नामाऽनुसन्धाता प्रतीच्ये जगति प्रकटयाञ्चकार । अमुना त्रयोदशाधिकनवशताधिकसहस्रमिते खिस्ताब्दे पञ्चविधसूत्रमपि अनूद्य प्रसिद्धीकृतम् । न केवलं वैदिकवाङ्मयमवबोद्धुं, देववाण्या व्याकरणस्येतिवृत्तमप्यवगन्तुं विद्वांसः प्रातिशाख्यानि समाश्रयन्ते ।

आचार्यगोल्डष्ट्यूकरः पाणिनीयव्याकरणं प्रातिशाख्यानि च समधीत्य तेषां कालक्रमानुसारि पौर्वापर्यसम्बन्धमुद्दिश्य सोद्यमं बहुविधप्रश्नान् प्रविचिन्त्य विस्तरशो विवेचयामास । आचार्यमोक्षमूलरस्तु प्रातिशाख्यानां पाणिनीयव्याकरणात्पूर्वभवत्वं प्रतिपादयाञ्चक्रे । पाणीनीयव्याकरणशास्त्रस्य परिणतस्वरशास्त्राधारिता प्रातिशाख्यपरिज्ञाने किलान्वेष्टव्यमित्यसौ तर्कयामास । मोक्षमूलरवद् आचार्यरोथोऽपि प्रातिशाख्यानां पाणिनिपूर्वभवत्वं स्वीचकार;

आचार्यवेबरोऽपि अपरं समाधानमपश्यन्नित्यमेव ऊहाञ्चक्रे। संस्कृतसाहित्येतिहासप्रणयनाल्लब्धयशस्कस्याचार्यविंतरनित्सस्य मतेऽपि तैत्तिरीयप्रातिशाख्यस्य पाणिनिपूर्वभवत्वे विप्रतिपत्तेरनवकाशः।

वैदिकमन्त्राणां याथातथ्येन पाठार्थं प्रातिशाख्यानि विशिष्टं महत्त्वं बिभ्रति। एकः शब्दः सम्यग् ज्ञातः सम्यक् प्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति शास्त्रोक्तिर्निगमेषु विद्वत्सु प्रथितैव। आचार्यमोक्षमूलरः पुराकालिकसंस्कृतसाहित्यस्येतिहासे प्रातिशाख्यानां स्वरूपमुद्दिश्य यन्मतं प्राचीकटत् तदनुसारं प्रातिशाख्यप्रणेतॄणां चिकीर्षितं वेदवाण्या व्याकरणस्य शिक्षणं नासीत्, प्रातिपदिकानां धातूनाञ्च रूपनिर्णयः, पदरचनानियमोपदेशो वा। प्रातिशाख्यानि कुत्रापि व्याकरणानीति संज्ञितानि न सन्तीत्यस्माद्धेतोर्मोक्षमूलरस्तेषां व्याकरणत्वं प्रत्यादिशन्नलेखीत्—'इमानि विशुद्धव्याकरणात्मकप्रश्नानानुषङ्गिकतयैव लक्ष्यीकुर्वन्ति। परिपक्वस्वरशास्त्राधारहेतोः पाणिनीयं शास्त्रमसंशयं प्रातिशाख्यैरनुगृहीतं विद्यते।'

प्रतीच्ये जगति यास्ककृतनिरुक्तस्य प्रकाशक आचार्यरोथो भूमिकायां संस्कृतव्याकरणोत्पत्तिविषयकं यन्मतं प्रकटयाञ्चकार तदपि प्रातिशाख्यानां पूर्वभवत्वं किल साधयति। एतदनुसारमपरत्राङ्गीकृतः पन्था इव अत्रापि व्याकरणशास्त्रस्य नैसर्गिकविकशनपरम्पराऽवलोक्यते। प्रचलितलिखितवाचामन्तरावेक्षणपूर्वक उद्भवोऽस्य न तु प्रचलितवाचाम्। आदौ त्वियं रचनाप्रक्रिया पार्थक्यसूचनावधिरेवासीत् प्राधान्येन। विशिष्टग्रन्थानुद्दिश्य एतच्छास्त्रं समारब्धं सामग्र्येण साहित्यान्तर्भूतं खलु न बभूव। इत्थं सामान्यव्याकरणशास्त्रनिर्मितेर्वर्त्म समुद्घारितमित्यसावौहिष्ट। संस्कृतव्याकरणस्योद्भवं दिदर्शयिषोरनुसन्धातुरेवम्भूतं मतमाचार्यगोल्डष्ट्यूकरोऽस्पष्टमतर्कग्राह्यं हास्यास्पदञ्चामंस्त। अयुक्तिसिद्धे मतेऽस्मिन्नमुष्य दृष्टौ कवेः कल्पना विलसति, न तु गवेषणात्मकवृत्तिः।

आचार्यवेवरः कात्यायनप्रातिशाख्यस्य जर्मनदेशीये संस्करणे स्वोपज्ञ उपोद्घाते स्वमतमचिख्यपत्। पाणिनीयव्याकरणकात्यायनप्रातिशाख्ययोः सम्बन्धोऽविच्छेद्य इति तस्य मतम्। अन्योन्यमवलम्बाते ते भूरिशो वाजसनेयिप्रातिशाख्यनियमाः, पाणीनीयव्याकरणे पुनर्भणिताः। एवमेव अष्टाध्यायीवद् वाजसनेयिप्रातिशाख्यं बीजगणितात्मिकाः परिभाषा अङ्गीचकार। तयोः साम्यं विपुले, वैषम्यमपि महत्। प्रातिशाख्यमिदं पाणिनीयव्याकरणनिरपेक्षमित्यत्र का खलु विचिकित्सा? तयोः साम्यहेतुस्तर्हि कथमवगन्तव्यः? आचार्यवेवरस्य दृष्टावेतद्विषयिका द्विविधा सम्भावना विद्यते। प्रथमा तु तयोः समानप्रभवेऽन्वेष्टव्या। अष्टाध्यायीप्रणेता कात्यायनप्रातिशाख्यादाददे इति त्वन्या। वेबरः प्रातिशाख्यानां भूतपूर्वतामुद्दिश्य गतसन्देहो बभूव। महर्षिणा पाणिनिना सूत्रपद्धतौ निष्पन्नो विकारस्तस्योत्तर-

कालिकत्वं खलु साधयति। बीजगणितात्मिकां सारगर्भां पद्धतिमिमां स सपाटवं वर्धयामास। अष्टाध्याय्याः प्रणयनयुगे ह्रस्वाकारः संवृत आसीत्। वाजसनेयिसंहितायाः प्रातिशाख्येऽथर्व-प्रातिशाख्ये चाप्यकारः संवृतः, किन्तु तत्र अकारः शुद्धतमः स्वरोऽपि। अत्र विषये पार्थक्य-हेतुर्देशभेदादपि भवितुं शक्नोति। वेबरो वाजसनेयिप्रातिशाख्यस्योद्भवं पूर्वदिश्ये भारते, पाणिनीयव्याकरणस्य चोत्तरपश्चिमीयभारते स्वीकर्त्तुमुत्सहते स्म।

प्रातिशाख्यस्य अर्वाक्तनत्वं वेबरो निश्चयदार्ढ्येन स्म प्रत्यादिशति। पाणिनीयस्य व्याकरणस्य वार्त्तिककारोऽपि अयमेव कात्यायन आसीदिति मतन्तस्य दृष्टौ सम्भावनाकोटिं परिवृणक्ति। उभयोः साम्यन्तु विशदमुभयोरन्तरमपि। नाम्नः साम्यन्तु प्रामाण्यतुलां नाधिरोहति। किमुभावेव समानकुलोद्भूतौ आस्तामेकगुरोरन्तेवासिनौ? सूत्रेषु साम्यं तयो-रादानप्रदानात्मिकां वृत्तिं किल स्पष्टयति। तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्या-देरिति उभयोरेव विद्येते। पाणिनीयव्याकरणस्य प्रथमाध्यायस्य तृतीयपादे दशमं सूत्रं यथासंख्यमनुदेशः समानां वाजसनेयिप्रातिशाख्यस्य संख्यातानामनुदेशो यथासंख्यमिति पदैः सदृशम्। पाणिनेः प्रथमाध्यायस्य चतुर्थपादस्थं द्वितीयं सूत्रं विप्रतिषेधे परं कार्यं वाजसनेयि—प्रातिशाख्यस्य विप्रतिषेध उत्तरं बलवदलोप इति पङ्क्त्या तुल्यम्। साम्यमिदं समान-व्याकरणपरम्परामपि निर्दिशतीति अनुसन्धातृभिर्नो विस्मर्त्तव्यम्। एवम्भूतानामुदाहरणानां नैयून्यं नास्ति। प्रातिशाख्ये वर्णस्यादर्शनं लोपः, पाणिनीयव्याकरणेऽदर्शनं लोपः। प्राति-शाख्ये उच्चैरुदात्तः, नीचैरनुदात्तः, उभयवान् स्वरितः पाणिनीयेऽपि तदेव। केवलमुभयवतः स्थाने समाहार इति विद्यते। प्रातिशाख्येऽस्ति तस्यादित उदात्तं स्वरार्धमात्रं, पाणिनीयेऽस्ति अर्धह्रस्वम्। प्रातिशाख्ये लभ्यते उदात्ताच्चानुदात्तं स्वरितं, नोदात्तस्वरितोदयम्। एवमेव पाणिनीयव्याकरणे लभ्यते उदात्तादनुदात्तस्य स्वरितो, नोदात्तस्वरितोदयम्। प्रातिशाख्ये समानस्थानकरणस्य प्रयत्नः सवर्णः। अष्टाध्याय्यां तुल्यस्य प्रयत्नं सवर्णम्। पङ्क्तिसाम्यस्य समानविषयहेतुतामाचार्यवेबर उपैक्षिष्ट इति चेन्न। प्रातिशाख्यमसौ स्पष्टतः पाणिनीयसूत्रा-पेक्षयाऽवरपदभागममंस्त। पाणिनीयसूत्रेषु या परिपक्वता यच्छैलीप्रौढत्वं वीक्ष्यते तस्य प्राति-शाख्येषु अदर्शनमिति निर्दिशन्नसौ ग्रन्थविशेषमेव लक्ष्यीकृत्य सूत्रप्रणयनहेतोः प्रातिशाख्य-कारस्य कार्यं पाणिनेरारम्भापेक्षयाऽकष्टसाध्यं मेने। अष्टाध्यायीकारस्य क्षेत्रं बहुविततमासीत्। समग्रसंस्कृतवाक्। वेबरस्य मते विषयवस्तुनः क्षेत्रपरिमितेः प्रातिशाख्यप्रणेताऽसन्दिग्धभावेन दार्ढ्येन च नियमान् ससर्ज, तद्विपरीततया पाणिनिर्निश्चयविकलवाद्दोलाचलचित्तवृत्तिर्बभूव।

आचार्यो गोल्डष्ट्यूकरो वेबरस्य एवंविधांस्तर्कान् सदार्ढ्यं खण्डयामास, दर्शयामास च महर्षिपाणिनिमुद्दिश्य प्रकटितमतस्य निःसारत्वमवहासार्हत्वञ्च। महर्षेरनवद्यां प्रतिभां दर्शं दर्शमष्टाध्यायीपठनकालेऽमुष्य चेतोऽमोमुदीत्।

## (२)

शब्दशास्त्रं लिलक्षयिषोर्महर्षेः पाणिनेः कालं निर्धारयितुं विहिता बहवः प्रयासा असाफल्यमेव भजन्ते। तथापि अनुसन्धातृभिः सीम्न उपलब्ध्यर्थं साभिनिवेशं चेष्ट्यते चेष्टितानामेतेषां वैभिन्न्यं किल स्वाभाविकम्। आचार्यवेबरस्य पाणिनीयव्याकरणं प्रातिशाख्यं चोद्दिश्य विहितोऽभ्यूहो नादरमर्हतीति आचार्यगोल्डष्ट्यूकरस्य मतं विशदीकृतम्। अभ्यूहनस्यास्य अतर्कसहत्वं प्रतिपाद्य प्रतीच्यजगतो वैयाकरणाग्रणीरसौ वेबरस्यैतद्विषयिकामव्युत्पन्नतां सूचयाञ्चक्रे। अकारमुद्दिश्य वेबरो यन्मतं प्रकटयाञ्चकार तद् गोल्डष्ट्यूकरस्तर्कानुमतं मन्तुं न शेके। सूत्रसाम्यहेतुं पाणिनेरवरकालिकत्वे संपश्यतो वेबरस्य निगमनपद्धतावसौ प्रतिनिविष्टतां स्वैरिताञ्च ददर्श। पाणिनिः कात्यायनश्चोभौ अकारस्य संवृततां स्पष्टीकुर्वाते; स्वरस्यास्योच्चारणमाश्रित्य नान्यत् किञ्चिदपि शब्दशास्त्रिणाविमौ लिलिखतुः। न कञ्चिदपि अपरो वैयाकरणः पुराकाले। पाणिनिर्यदि स्वीयस्मिन् व्याकरणे प्रथमाध्यायस्य द्वितीयपादस्य सप्तविंशतितमे सूत्रे उकारं निर्दिशति, कात्यायनस्त्वकारं तर्हि तयोरुच्चारणवैषम्यं कथं सिध्यति ?

वाजसनेयिप्रातिशाख्यमुद्दिश्य संस्कृतविद्वत्सु प्रथितो मोक्षमूलरः पुराकालिकसंस्कृतवाङ्मयस्येतिवृत्ते स्वमतमुपन्यस्यति। एतदनुसारं कात्यायनो ग्रन्थममुं प्रणिनाय। व्याकरणपरिभाषासु कृतावस्थामतिमात्रं प्रगतिर्लक्ष्यते। अस्य शैल्यां किञ्चिदपि नास्ति येन पाणिनेः समकालीनस्य पाणिनेः समीक्षकस्य कात्यायनस्य प्रातिशाख्यप्रणेतुश्च भिन्नव्यक्तित्वं साधयितुं शक्यते। पाणिनेः सूत्राणि वैदिकसंस्कृतार्थं नासन्नित्यत्र विसंवादावसरो नास्ति। वैदिकवाक्पद्धतिस्तु तेषु अपवादभूता। कात्यायनस्य प्रातिशाख्यमार्षयुगीनं प्रतिभाति। परं कात्यायनः स्वयमेव वाग्द्वयस्यास्तित्वं मनुत इत्यपि ऐतिह्यप्रेमिभिर्नो विस्मर्तव्यम्। अध्यायारम्भार्थममुना द्वौ शब्दौ निर्दिष्टौ—ओम्, अथ च। ओङ्कारो वेदेषु अथ च भाष्येषु। मोक्षमूलरस्य दृष्टौ प्रचलितभाषायां ग्रन्थप्रणयनात्— लौकिकसंस्कृतनियमग्रथनविषयिका शङ्का निरस्यते।

कात्यायनद्वयस्य नाम्नो निर्देशः कस्मिंश्चिदपि व्याकरणग्रन्थे नो विहितः। वार्त्तिककार एव वैदिकशब्दानामुच्चारणविधिमुद्दिश्य प्रातिशाख्यं प्रणीतवानिति मतं खण्डयितुं प्रमाणानि अलं न सन्ति। वेबरस्य कात्यायनद्वयस्य सिद्धान्तं मोक्षमूलरोऽपि प्रत्याख्याति, गोल्डष्ट्यूकरोऽपि। वेबरस्य कात्यायनद्वयसिद्धान्ते विसङ्गतिमवलोकयानुसन्धित्सुर्मोक्षमूलरः प्रातिशाख्यपाणिनीयव्याकरणयोः सूत्रसाम्यमुद्दिश्य यदौहिष्ट तद् गोल्डष्ट्यूकरस्य दृष्टावुपपत्तिमन्नास्ति। पाणिनीयव्याकरणस्य सर्वाणि सूत्राणि पाणिनीयानि नासन्निति मोक्षमूलरेण

विभावितम्। वार्तिकानि रचयता मुनिना कात्यायनेनैव स्वस्य प्रातिशाख्यवर्त्तीनि सूत्राणि अष्टाध्याय्यां पुनरुद्धृतानीत्यसौ आशशङ्के। कालं प्राप्य प्रातिशाख्यसूत्राणां समुद्धरणानि पाणिनीयाष्टाध्याय्यां सन्निविष्टानि। मोक्षमूलरेणोपस्थापितां सम्भावनामिमां गोल्डष्ट्यूकरो दार्ढ्येण प्रत्यादिशति। वेबरवदत्र मोक्षमूलरोऽपि प्रातिशाख्यादष्टाध्यायीमवरां मन्यते। अस्य मतानुसारं प्रातिशाख्यप्रणेता पाणिनेः समकालिक आसीदिति सम्भाव्यता बलीयसी। कात्यायनप्रणीतस्य प्रातिशाख्यस्य अष्टाध्याय्याः कात्यायनप्रणीतवार्त्तिकस्य च परम्परा कालक्रममनुससार। गोल्डष्ट्यूकरस्यात्र विषयेऽसहमतिः स्पष्टा। द्वितीयकृतेः कतिचिन्नियमान् प्रथमकृतेः सूत्रैः सदृशानवलोक्य मोक्षमूलरः कल्पते प्रथमकृतित एवंविधसूत्राणि तृतीयां कृतिमुपागतानि, तदनु तानि द्वितीयां कृतिमित्यसावाचिक्षेप। अमुष्य दृष्टौ सम्भावनेयमतर्कपुष्टा। अपि च पूर्ववर्त्तीनि सूत्राण्यनवेक्ष्य असम्पूर्णं व्याकरणं रचयितुमेतावान् मेधावी एतावान् कुशाग्रधीर्वैयाकरणः कथं प्रभवेत्। अष्टाध्याय्याः ३९९६ संख्यकेषु सूत्रेषु केवलं त्रीणि चत्वारि सूत्राणि नैवंविधानि सन्ति येषां कात्यायन उद्भावकः स्यात्। आचार्यगोल्डष्ट्यूकरस्य विवेचनानुसारन्तु प्रातिशाख्यानां प्रणयनं न केवलमष्टाध्यायीपरवर्त्ति, तत्पाणिनेरप्यर्वाक्कालिकं स्यात्। पाणिनीयव्याकरणप्रातिशाख्ययोर्मध्ये कालव्यवधानदैर्घ्यस्याभ्युपगमोऽतर्कग्राह्यो नास्ति।

प्रातिशाख्यपाणिनीयव्याकरणयोः कालसम्बन्धमुद्दिश्य प्रतीच्ये जगति संस्कृतविदां मध्ये भ्रान्तयः कथं सञ्चरिताः? स्वरूपावगमभ्रान्त्या इति गोल्डष्ट्यूकरः समाधातुं चेष्टते। असंशयं सर्वे पुराकालिका भारतीयग्रन्थकाराः पाणिनेरष्टाध्यायीं व्याकरणाभिधानं ददुः। पातञ्जलमहाभाष्येऽपि व्याकरणमहाभाष्यमिति पदं व्यवहृत्य पाणिनीयसूत्राणां व्याकरणत्वं स्पष्टीकृतं, द्रढितञ्च। एतद्विपरीतं प्रातिशाख्येभ्यो न कुत्रचिदपि व्याकरणमिति पदप्रयोगो वीक्ष्यते। शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषमिति षट्संख्यकानि वेदाङ्गानि को न जानीते? वेदस्य छन्दः पादौ, कल्पो हस्तौ, ज्यौतिषं चक्षुर्निरुक्तं श्रोत्रं, शिक्षा तु प्राणा, व्याकरणं मुखमिति स्मृतम्। साङ्गं वेदमधीत्यैव अध्येता ब्रह्मलोके महीयत इति पाणिनीयशिक्षायामञ्जसा निगदितम्। वेदार्थप्रतिपत्त्यर्थं वेदाङ्गानि समाम्नातानि। ननु वेदाङ्गेषु व्याकरणं, न तु प्रातिशाख्यानि। प्रातिशाख्यानि पाणिनीयव्याकरणात् प्राक्तनानि यदि चेत्तर्हि वेदाध्ययनसौकर्यार्थं प्रणीतानान्तेषामत्र विस्मरणं केन हेतुना? गोल्डष्ट्यूकरस्योपपत्तिरियं विचारमुद्दीपयति।

अथ च व्याकरणमहाभाष्यस्योपोद्घातेऽपि पतञ्जलिर्व्याकरणाधीतेरपरिहार्यत्वं निजगाद। वेदानामवगमार्थं वाग्ज्ञानमनिवार्यम्। 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति। ऊहः खल्वपि। न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते चावश्यं यज्ञगतेन

यथायथं विपरिणमयितव्याः। न तानवैयाकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मा-दध्येयं व्याकरणम्।...... ...ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय इति। प्रधानं च षडङ्गेषु व्याकरणम्।' ननु अष्टाध्यायीं महर्षिः केवलं वेदव्यतिरिक्तवागर्थं लौकिकभाषार्थं प्रणिनायेति चेन्न। वैदिकानां लौकिकानाञ्च उभयेषां शब्दानां विवेचनं तेन विहितम्। वैदिकप्रयोगाणां प्रतिपत्त्यर्थमनल्पसंख्यकानि सूत्राणि तस्य ग्रन्थे समुपलभ्यन्ते। पातञ्जल-महाभाष्यानुसारन्तु व्याकरणस्य प्रमुख उद्देशोऽस्ति वैदिकर्चां याथातथ्यार्थग्रहणम्।

ऋक्प्रातिशाख्यस्य पञ्चमाध्याये षत्वणत्वयोर्विधानमुद्दिश्य नियमा व्यधायिषत। अष्टाध्याय्याञ्च अष्टमाध्यायस्य तृतीये पादे। परं पाणिनीयव्याकरणात् प्रातिशाख्ये विषयोऽय-मधिकं पल्लवितः। ऋक्प्रातिशाख्यस्य सप्तमेऽष्टमे नवमे चाध्यायेषु स्वरदीर्घीकरणमुद्दिश्य यदुपवर्णितं तत् पाणिनेर्व्याकरणाद् विस्तृततरम्।

वाजसनेयिप्रातिशाख्यस्य स्वसम्पादितसंस्करणे ग्रन्थकारं कात्यायनमुद्दिश्य वेबरो यन्मतं प्रकटयाम्बभूव, तस्य विषयविवेचनमुद्दिश्य यद् गुणदोषं निरूपितवान्, तद् गोल्ड-ष्ट्यूकरः स्वके निबन्धे सदार्ढ्यं प्रत्यादिदेश। तन्मतानुसारं वार्त्तिककारः कात्यायनः खलु वाजसनेयिप्रातिशाख्यं प्रणिनाय। वाजसनेयिप्रातिशाख्यस्य प्रणयने तस्य चिकीर्षितं केवलं वैदिकार्थाधिगमे सौकर्यसम्पादनमासीदिति चेन्न। पाणिनीयसूत्राणि समीक्षितुमपि तेन यत्नो व्यधायि। अतो वाजसनेयिप्रातिशाख्येऽष्टाध्यायीगतसूत्राणामसौ सद्भावोऽन्यथा न ग्रहीतव्यः। कात्यायनेन पाणिनेः सूत्राणि यथास्थानं यथावसरं वृत्तिहेतोरुद्धृतानि। प्रथमाध्यायस्य प्रथम-पादस्य षष्टितमे सूत्रे पाणिनिर्लिलेख अदर्शनं लोपः। सूत्रमिदमस्पष्टार्थं मत्वा कात्यायनो लिखितवान्— वर्णस्यादर्शनं लोपः। प्रथमाध्यायस्य द्वितीयपादस्यैकत्रिंशत्तमे सूत्रे पाणिनिर्लिलेख— समाहारः स्वरितः। परिभाषामिमां सदोषां मत्वा कात्यायनः सूत्रं प्रणिनाय— उभयवान् स्वरितः। तस्यादित उदात्तमर्धह्रस्वमिति पाणिनिः। कात्यायनोऽर्धह्रस्वस्य स्थाने स्वरार्धमात्रं चकार। तुल्यास्य प्रयत्नं सवर्णमिति पाणिनिः। कात्यायनस्तुल्यस्य स्थाने समान-स्थानकरणस्येति युयोज। गोल्डष्ट्यूकरस्य मतानुसारं स्पष्टार्थसूत्राणामूर्ध्वमस्पष्टार्थसूत्राणां रचना बभूवेति सोपपत्तिकं नास्ति। कात्यायनस्यानल्पसंख्यकानि सूत्राणि पाणिनीयसूत्रेषु वार्त्तिकान्येवेत्यसौ सिद्धान्तयति।

( ३ )

प्राक्तने भारते शब्दानुशासनस्याप्रतिमं विकसनं विस्मयावहम्। अभूतपूर्वसांस्कृतिक-प्रगतेरकाट्यं प्रमाणमत्रोपलभ्यते। ऐतिहासिकतिथीनां निश्चायकप्रमाणाभावेन बहुधा तदानीन्तनानां भारतीयशब्दशास्त्राणां सम्यक् कालनिर्धारणमैतिह्यविदां परीक्षायै निकषतामेति।

तेन हि कतमो वैयाकरणः पुरातनः, कतमश्च तदपेक्षया नूतन इत्येतादृशस्य प्रश्नस्य समाधाने पाश्चात्यविदुषां वैमत्यं स्वाभाविकमेव।

शान्तनवस्य फिट्सूत्राणि लघ्वाकाराणि, परन्तेषां शब्दशास्त्रीयं महत्त्वमपलपितुं कः क्षमः ? तेषां समीक्ष्यविषयोऽस्ति सङ्कुचिताकारः, परं तदानीन्तने काले विहितोऽयं विषयविवेचनप्रयासोऽल्पावकाशविषयत्वादेव वैशिष्ट्यमावहति नितराम्। पाणिनीयं व्याकरणं फिट्सूत्रं वा कतरं पुरातनमिति विचिकित्सायां प्राचीनसंस्कृतसाहित्यमित्याख्यया ख्यातचरस्य स्वकीयग्रन्थस्य द्वापञ्चाशत्तमे पृष्ठे मोक्षमूलरः स्वकं मतमित्थं प्राचीकटत्— शान्तनवस्य फिट्सूत्राणि कस्मिन् युगे प्रणीतानीति निश्चप्रचरीत्या न जानीमो वयम्। पाणिनीये व्याकरणे तेषां ज्ञानाभासो नोपलभ्यते। शान्तनवेन व्यहृतानि व्याकरणपदानि पाणिनिना व्यवहृत-पदेभ्यो भिन्नानीत्येनं हेतुमुररीकृत्याचार्यो वर्टलिङ्कः सपाटवं शान्तनवस्य प्राच्यत्वमनुमेने। सूत्राणामेषां स्वरितोदात्तादिरूपमुच्चारणविषयमेव विवेच्यमस्ति केवलम्। विषयस्यास्य वैदिकसाहित्यसम्बन्धित्वाच्छान्तनवस्य पाणिनेरपेक्षया पुरातनत्वमनुमेयम्।

मोक्षमूलरस्य फिट्सूत्राणां पाणिन्यपेक्षया पुरातनत्वविषयकस्तर्कोऽयमकाट्यो नास्ति। विषयविवेचनशैल्या खलु ग्रन्थस्य पुरातनत्वमर्वाचीनत्वं वा साधयितुं वै शक्यते; विषयवि-वेचनक्षेत्रपरिधिरत्र विशिष्टं साहाय्यं न विदधाति।

आचार्यो गोल्डष्टयूकरोऽपि सन्दर्भेऽस्मिन् भिन्नामेव दृष्टिमङ्गीचकार। महर्षिः पाणिनिः स्वके ग्रन्थे फिट्सूत्रविषयकं ज्ञानं न कुत्रापि प्रकटीकरोतीति तथ्यं फिट्सूत्रस्य पश्चाद्भूतत्वमेव पोषयति। अन्यथा शान्तनवस्य प्राचीनत्वे तदीयफिट्सूत्राणां गुर्वर्थविषयविवेचनं कथमित्थमसावुपेक्षेत। ग्रन्थस्य विषयक्षेत्रं वैदिकवागेवेति मोक्षमूलरीया मान्यताऽपि गोल्ड-ष्टयूकरस्य दृष्टौ नादरमर्हति। वैदिकसूक्तानां भाषापि फिट्सूत्रस्य विषयवर्त्तिनी, पश्चाद्वर्त्ति-वाङ्मयस्य भाषापि। बहुविधशब्दानामुच्चारणविषयिकेयं कृतिर्नास्ति वैदिकसूक्तावधिः। गोल्डष्टयूकरानुसारं फिट्सूत्रस्य महत्त्वं वेदपाठिभ्यो महाभारतपुराणादिपाठिभ्यश्च समान-मानमेव। स्वयं पाणिनिरपि बहूनामेवंविधशब्दानां स्वरितोदात्तादिनियमान् निर्दिदेश ये संहितासु नोपलभ्यन्ते। मोक्षमूलरस्य फिट्सूत्रविषयिणी परिकल्पना यदि सत्यापि स्यात्तर्हि तथ्यमिदं फिट्सूत्रस्य पाणिनीयसूत्रात् पूर्ववर्त्तित्वसाधनार्थं प्रामाण्यं कथमुपस्करोति ? गोल्ड-ष्टयूकरः सपाटवं प्रश्नयति— वेदविषयकग्रन्थकारोऽन्यविषयकग्रन्थकारात्पूर्ववर्त्त्येवेति कथं निष्पद्यते ! महर्षिणा पाणिनिना तु उभे निरूपिते, वेदभाषा च, साहित्यभाषा च।

इत्थमाचार्यमोक्षमूलरस्य मतं निराकुर्वन्नाचार्यो गोल्डष्टयूकरः क्षेत्रेऽस्मिन् वटलिङ्क-मुद्दिश्य प्रकटीकृतां श्लाघोक्तिमपि प्रत्यादिशति। पाणिनिर्नासीत् प्राच्यवैयाकरणः। औद्

आङ् एङ् आदीनां प्राच्यवैयाकरणप्रयुक्तानां महर्षिः पाणिनिरपि प्रयोगं विदधे। यदि शान्तनवेनापि प्राच्यवैयाकरणप्रयोगः कृतस्तर्हि किं तथ्यमिदं तस्य प्राच्यवैयाकरणत्वसाधनार्थं पर्याप्नोति ? शान्तनवव्यवहृतपदानां पाणिनिव्यवहृतपदेभ्यो वैभिन्न्यमपि नो समीचीनं प्रमाणं भवितुमर्हति वैयाकरणस्यास्य प्राच्यत्वसाधनार्थम्। पाणिनेरनुबन्धसदृशं नास्त्येतेषां महत्त्वम्। भाष्येषु प्राच्यवैयाकरणप्रयोगत्वेन तान्यनिर्दिष्टानि। बटलिङ्कः स्वके निबन्धे शान्तनवस्य प्राच्यत्वं साधयितुं तत्सम्बन्धिपदान्युद्धरति सूत्राणामुद्धरणपुरस्सरम्। अष्, नप्, फिष्, यमन्वन्, शिट्, स्फिक्, इत्यादयः। भट्टोजिदीक्षितस्य कृतौ स्फिकः स्थाने लुप् विद्यते। गोल्डष्ट्यूकरः स्पष्टमेव बटलिङ्कस्योहनं प्रत्यादिशति। ननु बटलिङ्कप्रयुक्तान्युद्धरणान्येषां प्राच्यवैयाकरणप्रयोगत्वं साधयितुं किमलम् ? प्रमाणाभावे सिद्धान्तोऽयमबुद्धिग्राह्यम्। गोल्डष्ट्यूकरोऽपि शान्तनवस्य प्राच्यवैयाकरणत्वं समर्थयाञ्चकार, किन्तु तेन स्वीकृता हेतवो भिन्नाः सन्ति।

शान्तनवप्रणीतफिट्सूत्राणां वाक्क्षेत्रं परकालिककृतिवदेव। प्रातिशाख्यानां विस्तृतभूमौ क्षेत्रस्यास्यानुशीलनं फिट्सूत्राणां सङ्कीर्णक्षेत्रापेक्षया सुकरम्। प्रातिशाख्यानां विषयनिरूपणप्रणाल्या वैभिन्न्यं सुविदितम्। पाणिनेर्विषयनिरूपणशैल्यां यान्त्रिकता नास्ति, विद्यते तत्र गिरः स्वाभाविकं प्रस्फुटनम्। प्रातिशाख्यानां विषयनिरूपणं यान्त्रिकतानुसारि। फिट्सूत्राणामपि तथैव। पाणिनिः शब्दानामुच्चारणं तेषां सहजगुणसम्बन्धेन निरूपयितुं चेष्टते। प्रातिशाख्यवत् फिट्सूत्रेषु पूर्वनिर्मितशब्दानेव सूत्रकारः प्रयुयुजे। सम्भ्रमोत्पादकाः प्रतिपत्तिमूढत्वजनका यान्त्रिकनियमाः खलु दीयन्ते। कृतिरियं प्रातिशाख्यवदेव भारतस्य ह्रासयुगीना रचनास्ति, न तु स्वर्णयुगीनेति मतं गोल्डष्ट्यूकरेण प्राख्यापि। प्रातिशाख्यानां श्लाघायै समुचितबौद्धिकपरिवेशानुसारिकृतिरस्ति फिट्सूत्रम्।

ननु तुल्यक्षेत्रे पाणिनेरपेक्षया प्रातिशाख्येष्वधिका शब्दसामग्री समुपलभ्यते। हेतुनाऽनेन किलाचार्यो गोल्डष्ट्यूकरोऽत्र पाणिनेर्भूतपूर्वत्वमतर्कयत्। पाणिनिकाले प्रातिशाख्यानामुपस्थित्या तदानीन्तना वैयाकरणा लाभान्विता नो बभूवुरिति कथं तर्कयितुं शक्यते। तेषां ज्ञानस्यैवंविधमुपेक्षणं किं पाणिनेः प्रकृतिं संस्कारांश्च नो विरुणद्धि ? एवमेव शान्तनवस्य फिट्सूत्रं प्रत्यप्यूह्यते। समानविषयकेष्वध्यायेष्वष्टाध्यायी फिट्सूत्रादधिकसमृद्धा नास्ति। पूर्वकृतिमुपेक्ष्यैवंविधो वरीयान् वैयाकरणः सूत्राणि रचयाञ्चकारेति तर्कः किं ग्रहणीयोऽस्ति ?

कात्यायनस्य प्रातिशाख्यचिकीर्षितमासीत्पाणिनीयव्याकरणस्याभावपूरणं तत्समीक्षणञ्च। आचार्यवेबरस्य दृष्टौ कात्यायनः किल प्राच्यवैयाकरणो बभूव। निष्कर्षमिममाचार्यो गोल्डष्ट्यूकरः समर्थयाम्बभूव।

पाणिनीयव्याकरणस्य षष्ठाध्यायस्य प्रथमपादस्य त्रयोदशाधिकद्विशततमसूत्रानुसारमिभ्यशब्दस्य प्रथमाक्षरमुदात्तं स्यात् । यतोऽनावः । भट्टोजिदीक्षितः स्वके फिट्सूत्रव्याख्याने सूत्रमिममुद्धरति, पाणिनिविरुद्धशान्तनवमतदर्शनाय । अन्यत्राप्येवम् । तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः । अत्रान्ते स्वरितः स्यात् । पाणिनिमतध्वंसनाय फिट्सूत्रस्य प्रथमाध्यायस्य सप्तमं सूत्रमिदमित्येके मन्यन्ते स्म । हिष्ठवत्सरतिशत्यान्तानाम् । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुरिति भट्टोजिदीक्षितः । शान्तनवस्य प्रथमाध्यायस्य त्रयोविंशतितमं सूत्रमपि भट्टोजिदीक्षितटीकानुसारमष्टाध्याय्याः षष्ठाध्यायस्य प्रथमपादस्य सप्तनवत्यधिकैकशततमं सूत्रं विरुणद्धि । एवादीनामन्तोऽप्यत्र विचार्यः । भट्टोजिदीक्षितो विवृणोति — एवमादीनामिति पाठान्तरम् । एवा एवम् । नूनम् । सह । ते पुत्रसूरिभिः सह । षष्ठस्य तृतीये सहस्य स इति प्रकरणे सहशब्द आद्युदात्त इति प्राञ्चः । तच्चिन्त्यम् । अत्र पतञ्जलेः कैयटस्य चोक्तयो विमर्शनीयाः । आद्युदात्तनिपातनं करिष्यत इति पतञ्जलिः । निपाता आद्युदात्ता इति सहशब्द आद्युदात्त इति कैय्यटः ।

भट्टोजिदीक्षितस्य व्याख्यावदेव नागोजिभट्टस्य टिप्पणीष्वपि विमर्शनीयां सामग्रीं सुधियो नोपेक्षेरन् । फिट्सूत्राणां पाणिनीयव्याकरणविरोधितां निरीक्ष्य नागोजिभट्टो विवृणोति यद्वा फिट्सूत्राणि पाणिन्यपेक्षयाधुनिकर्तृकाणीति परत्वं बोध्यम् ।

अग्निशब्दस्योच्चारणार्थमाचार्यः सायणो यल्लिलेख तदपि फिट्सूत्राणां पाणिनीयव्याकरणपूर्ववर्त्तित्वं न साधयतीत्याचार्यो गोल्डष्ट्यूकरो द्रढयाञ्चकार । गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वेन फिषोऽन्त उदात्त इत्यन्तोदात्तत्वमिति सायणः । पाणिनेर्भूतपूर्वो गार्ग्योऽग्नेरुच्चारणार्थं फिट्सूत्राणां साहाय्यं जग्राहेति तु नात्रानुमेयम् । वाक्येऽस्मिन्नाचार्यसायणस्य शब्दा विद्यन्ते, न तु गार्ग्यस्य । गार्ग्यस्य फिट्सूत्रज्ञानप्रतिपादनमाचार्यसायणस्याभिमतं नासीदिति ।

## संस्कृते नामधातूनां प्रयोगः

प्रा॰ वेदप्रकाशः

'धातुः' इति अन्वर्थिका संज्ञा। स हि सकलं शब्द-व्यापारं दधाति। धातोरेव क्रियापदानि नामपदानि चाऽपि धीयन्ते। किमस्ति तद् वाचि, यद् अनेन धातुना न विधीयते? यत्सत्यम्, अयमेव भाषा-भवनस्य आधारः। धातूनां प्रायेण सहस्र-द्वयेन संस्कृतं सर्वथा समृध्यति इति श्लाघितुमर्हामः।

तथा च, एकैकेन उपसर्गेण उपपदेन वा सम्पृक्ताः, सम्भूय वा तैरुपसृष्टाः, धातवो गणनायाः परां कोटिं भजन्ते। मूर्तानमूर्तान् वा, सूक्ष्मान् स्थूलान् वा, अनल्पान् कार्य-कलापान् प्रकटयितुं पारयन्ति सोपसर्गाः सोपपदाश्च धातवः। इत्थं संस्कृतं नाम वाणी समृध्यतितराम्, मा भूदत्र कश्चित् संशय-लेशः।

अन्यच्च, यथाऽऽङ्ग्लादिषु भाषासु तथा संस्कृते नामान्यपि धातूयन्ते। धातोर्जातानि[1] नामानि पुनः धातून् जनयन्ति, इत्यहो परस्परमनुग्रह-विनिमयः! न केवलं नामपदान्येव अपि तु सर्वनामपदानि, विशेषणपदानि तथा चाव्ययपदान्यपि तिङ्-योगेन क्रियावदाचरन्ति। नामिक्यः क्रिया नाना भावान् विविधांश्च सम्बोधान् वाचाऽनुवादयितुं प्रकल्पन्ते। अनेन गीर्वाणवाणी समृध्यतितमामिति किमत्र चित्रम्?

नामधातूनधिकृत्य प्रवृत्ता वयं न तथा तदीयां रूप-रचनां व्याकर्तुमत्र उद्दिशामो, यथा तदीयान् प्रयोगान् व्याख्यातुम्। अतः प्रत्यय-निरूपणं लवेन स्पृष्ट्वा नामिकीः क्रिया अर्थदृशा वर्गीकृत्योदाहरिष्यामः।

क्यच्-क्यङ्-क्यष्-काम्यच्-णिच्-णिङ्-क्विब्भिः सप्तभिः प्रत्ययैः, सुगसुग्भ्यां च द्वाभ्यामागमाभ्यां नामिकी क्रिया रूपदृशा नवधा भिद्यते। एभिः कृतानि रूपाणि क्रमेण

---

१—तत्र नामान्याख्यातजानीति........। निरुक्ते १।१२।

उदाह्रियन्ते— पुत्रीयति, पुत्रायते, पटपटायति, -ते, पुत्रकाम्यति, सूत्रयति, परिपुच्छयते, पुत्रति, दधिस्यति, दध्यस्यति। निपुणं विविच्यमानाश्चैते प्रत्ययाश्चतुर्ष्वेव वर्गेषु समाहर्तुं शक्यन्ते, य-वर्गः, अय-वर्गः, स्य-वर्गः, शून्य-वर्गश्चतुर्थः। एकमन्तरेण सर्वेष्वेव वर्गेषु यकारः समानं श्रूयते, अतो नामिक-क्रिया-वृत्तौ यकारो रूपकारी प्रधानः प्रत्ययः स्वीक्रियेत।

१—य-वर्गः। क्यच्-क्यङ्-क्यषो य-वर्गेऽन्तर्गताः। यकारेऽनुबद्धाश्च-ङ-षास्तु केवलं क्रियाङ्गभेदका आत्मनेपद-परस्मैपद-प्रयोजनाः। काम्यजपि काम-नामपदेन सह योजिताद् यकारान्नाऽतिभिन्नम्, अतस्तदप्यत्राऽन्तर्हितम्। नामपदस्य तिङश्च मध्ये आगत्य यकारो नामिक-क्रियाया अङ्गं निर्माति। यथा— पुत्रीयति, पुत्रायते, पुत्रकाम्यति।

२—अय-वर्गः। ण्यन्त-प्रक्रियायाः प्रेरणा-लक्षणो अय-ध्वनि-समूहो नामपद-तिङो-रन्तरागत्य नामिकीं क्रियामुपक्रमते। णिच्-णिङौ प्रत्ययाव स्मिन् वर्गेऽन्तर्भवतः। यथा— लवणयति, मिश्रयति, मुण्डयति, परिपुच्छयते।

३—स्य-वर्गः। सन्नन्त-प्रक्रियायां श्रूयमाणः स-ध्वनिरपि केवलो वा, अ-पूर्वो वा, निजेनार्थेन सहितो य-प्रत्ययस्य सहायीभवति। सुका वा, असुका वा सहितः क्यच् अस्य वर्गस्य प्रत्ययः। यथा— दधिस्यति, दध्यस्यति, मधुस्यति, मध्वस्यति।

४—शून्य-वर्गः। सर्व-प्रत्यय-लोप-रूपश्चतुर्थो वर्गः। अत्र नामपदमेव केवलं प्रत्ययान्तर-रहितं भ्वादिगण-दिशा वाऽदादिगण-दिशा वा, तिङा संस्कृत्य नामिक-क्रिया-रूपेण प्रयुज्यते। क्विपैव केवलेनायं वर्गः प्रतिनिधीयते। यथा— भिषक्ति, कृष्णति, मालाति।

अथ यदि अर्थ-दृशा नामिकी क्रिया विविच्यते, तदा सा सप्त-प्रायेषु वर्गेषु स्थाप्यते— आचरणे ( to behave ), उपचरणे ( to treat ), करणे (to make), वेदने (to feel), आख्याने ( to declare ), एषणे ( to desire ), सम्प्रयोगे ( to use ) च सप्तमे। तेऽधस्ताद् यथाक्रमं निदर्श्यन्ते।

१—अथादिम आचरण-वर्गः। उपमान-भूत-द्रव्यवद् यः कर्तुर्व्यवहारः स एव-चरण-पदेन संज्ञायते। अभूत-तद्-भावश्च, अभूत-तद्वद्-भावश्चेति तौ द्वावप्यत्रैवा-न्तर्भवतः। आचरणेऽर्थे उपमान-भूतात् कर्तृ-वाचिनः प्रथमान्तात्पदात् क्विप्[1], क्यङ्[2],

---

१—'सर्व-प्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' वा. ३।१।११।

२—'कर्तुः क्यङ् सलोपश्च', 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः', पा. ३।११।१।१२।

क्यष्[१] वा भवति। आचरत्यर्थे भवत्यर्थे वैषा क्रिया वाक्ये कर्मपदं नापेक्षते, अतोऽकर्मिका। तद् यथा—

(क) क्विप् १—नामपदेभ्यः। अदन्तादश्व-पदाद् 'अश्वति'। आदन्तान्माला-पदाद् 'मालाति'। इदन्ताद् विधु-पदाद् 'विधवति'। ऊदन्ताद् भू-नामपदाद् 'भवति' = भूरिव आचरति। ऋदन्तात् पितृ-पदात् 'पितरति'। हलन्ताद् भिषक्-पदाद् 'भिषक्ति'। गुरुः शिष्येषु पितरति = पितेवाचरति। अद्यत्वे विरला एव शिष्या गुरौ पुत्रन्ति = पुत्रा इव आचरन्ति। क्षेत्रेषु केदार-प्रान्ता एव पदातिभ्यः पथीनन्ति = पन्थान इव आचरन्ति।

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः।
यामिनयन्ति दिनान्यपि सुख-दुःख-वशीकृते मनसि॥

व्याप्त-व्योम-तले मृगाङ्क-धवले निर्धौत-दिङ्-मण्डले,
देव! त्वद्-यशसि प्रशान्त-तमसि प्रौढे जगत्-प्रेयसि।
कैलासन्ति महीभृतः फणभृतः शेषन्ति पाथोधयः,
क्षीरोदन्ति सुरद्विपन्ति करिणो, हंसन्ति पुंस्कोकिलाः॥[२]

२—सर्वनामपदात्। अयं मे चिरपरिचितः सखेति दृढं जाने, परं त्वां नाऽभिजानामि, अपरिचितोऽपि त्वमिदामसीति महान् मे हर्ष-विषयः। इदामसि = अयमिवाचरसि।

(ख) क्यङ् १—नामपदेभ्यः। अदन्तात् 'श्येनायते'। आदन्ताद् 'दोलायते'। इदन्तात् 'कवीयते'। ईदन्तान् 'नदीयते'। उदन्ताद् 'विष्णूयते'। ऊदन्ताद् 'वधूयते'। हलन्ताद् राजन्-पदाद् 'राजायते', अप्सरस्-पदाद् 'अप्सरायते'।

वह्निस्तस्य जलायते, जलनिधिः कुल्यायते तत्क्षणात्,
मेरुः स्वल्पशिलायते, मृगपतिः सद्यः कुरङ्गायते।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते,
यस्याऽङ्गेऽखिल-लोक-वल्लभतरं शीलं समुन्मीलति॥[३]

२—विशेषणपदेभ्यः। अभृशो भृशो भवति = भृशायते। अपण्डितः पण्डितो भवति = पण्डितायते। पण्डितायते लोकः सद्भिः सङ्गेन। स्वार्थ-हानि-शङ्कया जना दुर्मनायन्ते स्वेषु।

---

१—'लोहितादि-डाज्भ्यः क्यष्, पा. ३. १. १३.।
२—राजेन्द्रकर्णपूरे
३—नीतिशतके

( ग ) क्यष् १—विशेषणपदेभ्यः। अलोहितो लोहितो भवति = लोहितायति, लोहितायते वा। लोहितायतेऽस्य वदनं क्रोधेन। शिशुरयं कपोलयोः पाटलायते।

२—डाजन्ता ध्वन्यनुकरण-शब्दा अपि क्यष्-प्रत्ययं लभन्ते। पटपटायति, पटपटायते। किटकिटायति,–ते। सिमसिमायति,–ते। अद्यापि कुरकुरायत एवैषा सारिका[1]।

२—अथ द्वितीयो वर्ग उपचारार्थकः। उपमान-भूते पदार्थे इव कर्मणि यः कर्तुर्व्यवहारः सोऽत्र उपचरण-नाम्नाऽभिधीयते। अत्रोपमान-भूतात् कर्मवाचिनो द्वितीयान्तात् पदात्, अधिकरण-वाचिनो वा सप्तम्यन्तात् पदात्, क्यच्[2] भवति। एषा क्रिया वाक्ये उपमेय-भूतं कर्मपदमधिकरणपदं वाऽपेक्षते। तद् यथा—

( क ) कर्मपदेभ्यः। अदन्तात् पुत्र-पदात् 'पुत्रीयति'। आदन्तात् खट्वा-पदात् खट्वीयति। इदन्तात् कवि-पदात् 'कवीयति'। उदन्ताद् विष्णु-पदाद् 'विष्णूयति'। ऋदन्तात् पितृ-पदात् 'पित्रीयति'। ओदन्ताद् गो-पदाद् 'गव्यति'। औदन्ताद् नौ-पदाद् 'नाव्यति'। पुत्रीयति शिष्यं गुरुः = शिष्यं पुत्रमिवाचरति। वयं मात्रीयामो जन्मभूमिम्। भारते शिष्या गुरूयन्ति स्म गुरुपुत्रम्।

( ख ) अधिकरणपदेभ्यः। प्रासादीयति कुट्यां भिक्षुः = कुट्यां प्रासादे इव आचरति। पर्यङ्कीयन्ति श्रमिकाः खट्वास्वपि = श्रमिकाः खट्वास्वपि तथाऽऽचरन्ति यथा धनिकाः पर्यङ्केषु।

३—अथ करणार्थकः तृतीयो वर्गः। रचयति, चरति, उद्वमति, वर्तयतीत्यादयः करोतेरेव भाव-विकाराः। कर्मवाचिनो द्वितीयान्तात् पदात् करोत्यर्थे क्यङ्[3], क्यच्[4], णिच्[5], णिङ्[6] वा भवति। तद् यथा—

---

१— रत्नावल्याम्।

२—'उपमानादाचारे', पा० ३। १। १०। 'अधिकरणाच्चेति वक्तव्यम्' वा० ३। १। १०।

३—'कर्मणो रोमन्थ-तपोभ्यां वर्त्ति-चरोः', 'वाष्पोष्माभ्यामुद्वमने', 'फेनाच्चेति वक्तव्यम्' (वा०), 'शब्द-वैर-कलहाऽभ्र-कण्व-मेघेभ्यः करणे', पा० ३। १। १५–१७।

४—'नमो-वरिवश्-चित्रङः क्यच्' पा० ३। १। १६।

५—'मुण्ड-मिश्र-श्लक्ष्ण-लवण-व्रत-वस्त्र-हल-कल-कृत-तूस्तेभ्यो णिच्', पा० ३। १। २१।

६—'पुच्छ-भाण्ड-चीवराण्णिङ्', 'पुच्छादुदसने व्यसने पर्यसने वा' (वा०), 'भाण्डात् समाचयने' (वा०), 'चीवरादर्जने परिधाने वा' (वा०), पा० ३। १। २०।

( क ) क्यङ्, नामपदेभ्यः। क्रियापदे एव कर्म-भूत-नामपदस्यान्तर्हितत्वात् क्रियेयं कर्मान्तरं नाऽपेक्षते, अतोऽकर्मिकेयं क्रिया। शब्दं करोतीति शब्दायते। शब्दायन्ते छात्राः कक्षायाम्, तेन जानीमहे नास्ति तत्राऽध्यापकः। धूममुद्वमति = धूमायते।

धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ॥[१]

क्वथितं क्षीरं वाष्पायते, कालोऽयं तण्डुलावापस्य। ऊष्मायते भूरभिवृष्टा नवोदकेन। फेनायते सर्पदष्टो जन्तुः। मेघायते ऊष्मा वर्षासु।

( ख ) क्यच्, सकर्मिकां क्रियां निर्माति। नमस्यति गुरुम्। वरिवस्यति पितरम्। ततोऽचित्रीयताऽस्त्रौघैः[२]।

( ग ) णिच्, सकर्मिकां क्रियां रचयति। १—नामपदेभ्यः। सूत्रं करोतीति सूत्रयति। कन्दलम् (इव) करोति = कन्दलयति। संपिष्य चूर्णम् (इव) करोति = संचूर्णयति। कामं करुण-गम्भीरः प्रयोगः कन्दलयति मानसम्। संचूर्णयामि गदया न सुयोधनोरू ![३]

२— विशेषणपदेभ्यः। मुण्डयति माणवकमुपनेष्यमाणम्। श्लक्ष्णयति कचांस्तैलेन। मिश्रयति धाना गुडेन। दवयति दुःखानि, नेदयति च सुखानि सुकृतां सम्प्रयोगः। दवयति = दूरं करोति, नेदयति = निकटं करोति। वृद्धमपि यवयति च्यवनप्राशः। स्निग्धमन्नं स्थवयति देहम्।

बधिरयति कर्ण-विवरं वाचं मूकयति नयनमन्धयति।
विकृतयति गात्र-यष्टिं सम्पद्-रोगोऽयमद्भुतो राजन्॥

३—अव्ययपदात्। तिरः करोतीति तिरयति। क्रमात् क्रामन्नद्रि-द्रुम-पुर-विभागांस्तिरयति,[४] तिरयति करणानां ग्राहकत्वं प्रमोहः[५]।

( घ ) णिङ्, नामपदेभ्यः। कर्मपदस्य क्रियापदेऽन्तर्भावात् क्रियाऽकर्मिकाऽत्र। शङ्कितोऽयं कुक्कुर उत्पुच्छयते = पुच्छमुच्चैः करोति। अशनार्थी कुक्कुरो विपुच्छ-

---

१— महाभारते।

२—भट्टिकाव्ये।

३—वेणीसंहारे।

४—रत्नावल्याम्।

५—मालविकाग्निमित्रे।

यते = पुच्छं दक्षिणात् पार्श्वाद् वामं पार्श्वं करोति, वामाच्च दक्षिणमिति विविधं करोति। स्वामिभक्तोऽयं कुक्कुरः स्वामिनं दृष्ट्वा परिपुच्छयते = पुच्छं परितः करोति, मण्डलाकारं चालयति। वनं जिगमिषू रामः संचीवरयते = चीवराणि परिधत्ते। आसीदति मम कन्याया विवाह-कालः, अतोऽहं सम्भाण्डये = भाण्डानि समाचिनोमि।

४—अथ वेदनेऽर्थे चतुर्थो वर्गः। अत्र कर्मवाचिनो द्वितीयान्तात् पदात् क्यङ्[1] भवति। कर्मपदस्य क्रियायामन्तर्गतत्वात् क्रियैषाऽकर्मिका भवति। तद् यथा—

सुखं वेदयते = अनुभवतीति सुखायते। दुःखं वेदयत इति दुःखायते। महीं महत्त्वं वेदयत इति महीयते। अल्पकेऽपि स्वके गृहे यथा सुखायते जनः, न तथा विशालेऽपि परकीये वेश्मनि। महार्घतयाऽद्यत्वे दुःखायन्ते बहुसन्तानाः। वेदं जानानो लोकेषु महीयते।

५—अथ पञ्चमो वर्ग आख्याने कथनेऽर्थे। कर्मवाचिनो द्वितीयान्तात् पदात् 'तदाचष्टे' इत्यर्थे णिज्[2] भवति। सकर्मिकेयं क्रिया। तद् यथा—

सत्यमाचष्टे इति सत्यापयति। राजपत्रितोऽयम् अधिकारी प्रमाणपत्राणि सत्यापयति। अपि त्वं तथ्यानीमानि न्यायालयेऽपि सत्यापयिष्यसि? तव वचनं गुरोः पुरतः सत्यापयितुमुद्यतोऽस्मि। अर्थमाचष्टे = प्रयोजनमाख्यातीति अर्थापयति। राज्यस्य शिक्षामन्त्री निजां शिक्षानीतिमर्थापयति।

६—अथ एषणार्थकः षष्ठो वर्गः। कर्मवाचिनो द्वितीयान्तात् पदादिच्छार्थे क्यच्[3], काम्यच्[4], अथवा सुका वा असुका वा युक्तः क्यच्[5] भवति। कर्मपदस्यान्तर्हितत्वाद कर्मिकैव क्रिया। तद् यथा—

(क) क्यच्। पुत्रमात्मन इच्छतीति पुत्रीयति। अपुत्रस्य वार्द्धक्यमसुखमिति पुत्रीयन्ति जनाः। पित्रीयति अनाथः। अमातृकोऽयं शिशुर्मात्रीयति। इयं युवतिः कन्या पतीयति।

---

१—'सुखादिभ्यः कर्तृवेदनायाम्', पा० ३।१।१८।

२—'सत्याप....चुरादिभ्यो णिच्', 'अर्थ-वेद-सत्यानामापुग्वक्तव्यः', (वा०), अर्थं, वेदं, सत्यमाचष्टे (काशिका), पा० ३।१।२५।

३—'सुप आत्मनः क्यच्', पा० ३।१।८।

४—'काम्यच्च', पा० ३।१।९।

५—अश्व-क्षीर-वृष-लवणानामात्मप्रीतौ क्यचि', पा० ७।१।५१।

'सर्व-प्रातिपदिकेभ्यः क्यचि लालसायां सुगसुकौ' (वा०), पा० ७।१।५१।

अजानिश्चाऽयं जनीयति। वाच्यति मूकः। समिध्यति माणवको यष्टुम्। तत्तदुपद्रव-भीता योग-क्षेम-कामिन्यः प्रजा राजीयन्ति[४] दीर्घोऽध्वा गन्तव्योऽस्माभिः, अतो अश्वीयामः। 'पुस्तकी भवति पण्डितः' इत्यवधार्य पुस्तकीयन्ति छात्राः। गोक्षीरमुत्तमं क्षीराणामिति गव्यन्ति बुद्धिजीविनः। नौचालनमभ्यसितुकामाश्छात्रा नाव्यन्ति।

(ख) काम्यच्। आत्मनः पुत्रमिच्छतीति पुत्रकाम्यति। सुखकाम्यति। स्वःकाम्यति। ककाम्यति। मनस्विनः प्राण-व्ययेनाऽपि यशस्काम्यन्ति।

(ग) सुक्+क्यच्, असुक्+क्यच्। लालसायामर्थादुत्कटेऽभिलाषे एतत् क्रिया-रूपं जायते। क्षीरस्यति बालः = क्षीरं बलवदिच्छति। लवणस्यत्यश्वः। दधिस्यति, दध्यस्यति वा ओदनप्रियो बटुः। मधुस्यति, मध्वस्यति वा शिशुः। आत्मनिप्रबुद्धा न प्रजास्यन्ति। कृतार्थाः[५] न सन्तानं बलवदिच्छन्ति। वृषस्यति गौः। अश्वस्यति बडवा।

७—अथ सम्प्रयोगेऽर्थे सप्तमो वर्गः। करणभूतात्तृतीयान्तात्पदात् करणोपकृते क्रियाविशेषेऽर्थे क्विप्, क्यच्, णिज्[१] वा भवति। क्रियैषा वाक्ये कर्मपदमपेक्षते। तद् यथा—

(क) क्विप्— चञ्चुना प्रहरतीति चञ्चवति।

(ख) क्यच्— उदकेन सिञ्चतीति उदन्यति। 'उदन्यति क्षेत्राणि' इति वेदे।

(ग) णिच्— श्लोकैरुपस्तौति = उपश्लोकयति। उपश्लोकयति सरस्वतीं कविवरः। गीतं गायन्तीं कुमारीं तस्याः सखी उपवीणयति = वीणया उपगायति। अभिषेणयति लङ्कां रामः = सेनयाऽभियाति। युद्धावसरे सैनिकाः संवर्मयन्ति = वर्मणा संनह्यन्ति। व्रण-मुखमवचूर्णयति शल्यचिकित्सकः = चूर्णैरवकिरति। अपहस्तयन्ति राजपुरुषा जन-सम्मर्दम् = हस्तेनाऽपवारयन्ति। कीलेन बध्नातीति कीलयति। शृङ्खलया बध्नातीति शृङ्खलयति। पाशैर्बध्नातीति पाशयति। धूमेनाऽऽवृणोतीति आधूमयति। तिमिरेणावृणोतीति तिमिरयति। वस्त्रेण समाच्छादयतीति संवस्त्रयति। लवणेन युनक्तीति लवणयति। रूपेण युनक्तीति रूपयति। वर्णेन युनक्तीति वर्णयति।

---

४—चरके सूत्रस्थाने।

५—महाभारते।

१—'सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्', पा० ३।१।२५। 'वस्त्रात् समाच्छादने', वा० ३।१।२१।

नामिकी क्रिया वाग्व्यवहारस्य महदुपकरोति। संक्षेप-करणमस्याः प्रथमो गुणः, सौन्दर्य्य-विधानञ्च द्वितीयः। एकाधिकैः पदैरभिधेयमर्थं पदेनैकेनैव संक्षिप्याभिधातुमियमलम्। अपि च— एषा व्यक्तीनां चरित्र-चित्रण-करम्, वस्तूनां गुण-वर्णन-परञ्चोपमानं स्वगर्भे करोतीति वाक्य-निबन्धेषु लालित्यमपि योजयति। अस्या उपयोगिता वाग्विद्भिः सदैव न केवलं प्रत्यभिज्ञाता, अपि तु प्रयोगेणापि स्वीकृता। प्राचीनतमादेव कालादारभ्य संस्कृत-भाषायाः सर्वेषु चरणेषु नामिक-क्रियायाः प्रयोग उपलभ्यते। वैदिक-वाङ्मये संहितासु, ब्राह्मणेषु, आरण्यकेषु, उपनिषत्सु, सूत्रग्रन्थेषु च यत्र तत्र नामधातवो दृष्टिगोचरीभवन्ति। तदनन्तरं लौकिक-वाङ्मये तु रामायण-महाभारतयोः, अन्येषु च पद्य-गद्य-प्रबन्धेषु, नाटकेषु नामिक-क्रियाः प्रचुरतया प्रयुज्यमाना दृश्यन्ते।

चुरादि—गणीया धातवो नामधातुभ्यो विकसिता इति आधुनिकभाषावैज्ञानिकानामेके मन्यन्ते। तद् यथा— मन्त्र-नामपदात् 'मन्त्रयते' = मन्त्रं करोति। अर्थ-नामपदाद् 'अर्थयते' = अर्थमात्मन इच्छति। वर्ण—नामपदाद् 'वर्णयति' = वर्णेन योजयति। कथम्—अव्ययपदात् 'कथयति' = कथममूदिति विदितं करोति।

व्याकरणेनार्थं निर्दिश्य प्रत्यया विधीयन्ते, परं प्रत्यर्थमेकस्यैव प्रत्ययस्य नियमो नास्ति, न चापि प्रतिप्रत्ययमेकस्यैवार्थस्य व्यवस्था। यद्यपि अर्थाश्च प्रत्ययाश्च न व्यवतिष्ठन्ते तथापि रूपभेदेन वाक्यप्रसङ्गेन च विवेक्तुं शक्यते किमर्थकोऽयं प्रयोग इति। नास्ति वाक्य-प्रयोगेषु क्वचिद् नामधातूनामर्थ-सङ्करस्यावसरः।

## भारतीयसंस्कृतिनिकषे

# शकुन्तलाया मदनलेखस्य काञ्चनत्वम्

डॉ० राजेन्द्रमिश्रः

संस्कृत-वाङ्मये मदनलेखानां ( Love Letters ) परम्पराऽतिप्राचीना वर्तते। शीलसङ्कोचकौलीनसमुदाचारसंवलितेषु संविधानकेषु प्रेमपत्राणीमानि नायकस्य नायिकाया वा भग्नप्रायां जीवनतरणिमुद्धर्तुमरित्रायमाणानि संल्लक्ष्यन्ते स्म। यथाकथञ्चिदपि सहजोद्वाहमार्गेऽवरुद्धे, कस्यचिन्महनीयकुलपुरुषस्य विरोधवशाद्वा संशयापन्ने सति निखिलेऽपि परिणयसम्भावने नायकरूपगुणसौन्दर्यसमाकृष्टास्तन्मनस्काः कुलकन्यका मदनलेखं पाथेयीकृत्य प्रवर्तन्ते स्म। यतो हि मदनलेखेषु प्रणयविनिवेदनस्य परोक्षशैली प्राभवत्, तस्मादेव नायको नायिका वा सङ्कोचमवधूय हीनभावनां वा तिरस्कृत्य पत्रेष्वेषु स्वहृदयान्येव प्रोद्घाट्य विशदीचकार। एवम्भूते तु पत्राणीमानि विद्युद्गत्या प्रतिकर्तुं प्रबभूवुः। प्रायेणैवैतत्परिणामवशादसम्भवमपि सम्भवं भवद् व्यलोकि।

एवंविधस्यैव कस्यचिन्मदनलेखस्य चर्चा श्रीमद्भागवतमहापुराणस्य दशमस्कन्धे [ उत्तरार्धे ५२ मितेऽध्याये ] वर्तते। बाल्यकालादेव नन्दनन्दने गोविन्दे विलीनहृदया तदर्पितपार्थिवकलेवरा भीष्मकनन्दिनी वैदर्भी रुक्मिणी स्वाग्रजेन रुक्मिणा, चेदिराजपुत्रेण शिशुपालेन सार्धं परिणेतुं निश्चीयते तदनुकूलं प्रयत्यते च। आसीदकारणवैरी रुक्मी परब्रह्मावतारभूतस्य लीलापुरुषोत्तमस्य श्रीकृष्णस्य। नैराश्यमुपगता भर्तृदारिका रुक्मिणी स्वप्रणयनिवेदनं विश्वस्तस्य कस्यचिद् द्विजस्य साहाय्येन द्वारकाधीशं प्रति प्रेषयामास। भगवतो द्वैपायनव्यासस्य रससिक्तकवित्वेन क्रान्तिदर्शिन्या प्रतिभया च विभूषितोऽसौ मदनलेखो रुक्मिण्या भारतीयसंस्कृतेर्मर्यादायाश्च पूततमः परिचायक इत्यत्र न कश्चन सन्देहः।

अतिमार्मिकः खलु रुक्मिणीमदनलेखारम्भः[१]। तथा हि–हे भुवनसुन्दर! भवतां गुणा ये खलु श्रोतॄणां कर्णपथातिथीभूय हृदयप्रविष्टास्सन्तः प्रत्यङ्गसन्तापं निर्वापयन्ति, भवदीय-

---

१. 'श्रुत्वा गुणान् भुवनसुन्दर! शृण्वतां ते निर्विश्य कर्णविवरैर्हरतोऽङ्गतापम्।
रूपं दृशां दृशिमतामखिलार्थलाभं त्वय्यच्युताऽऽविशति चित्तमपत्रपं मे॥'

रूपसौन्दर्यञ्च यत्खलु नेत्रधारिणां प्राणिनां कृते धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयस्य फलमिव सर्वस्वं वरीवर्ति। हे प्राणप्रियाऽच्युत! तं गुणसमूहं तद्रूपसौन्दर्यञ्च श्रावं श्रावं मदीयं मनोऽपत्रपां विहाय त्वय्येव समाविशति।

पत्रस्य समापनमपि[1] न तावत्किञ्चिदूनं मर्मोद्घाटने। तथा हि, हे कमलनयन! भगवान् वृषभध्वज इव महान्तोऽपि लोकपुरुषा निजात्मशुद्धये भवच्चरणेन्दीवररेणुस्नपनं समीहन्ते। तामेव प्रसादभूतां भवदङ्घ्रिधूलिमङ्गीकर्तुमक्षमाऽहं शरीरमिदं व्रतोपवासैः परिशोष्य प्राणान् त्यक्ष्यामि।

रुक्मिण्या विरहवेदनां विवशताञ्च विज्ञायाऽनुभूय पुलकितगात्रो गोविन्दः सन्देशहरं ब्राह्मणदेवं प्रत्युवाच— मदीयमपि चित्तं नक्तन्दिवं रुक्मिण्यामेव समासक्तम्। रात्रौ न प्राप्यते निद्रासुखम्। द्विजोत्तम! भर्तृदारिकां प्रत्येतावदेव मद्वचनाद् विज्ञापनीयं यत्काष्ठेभ्योऽग्निशिखामिव भीष्मकनन्दिनीं तां प्रसह्याऽऽनेष्यामि नृपतिम्मन्येभ्यो हीनपौरुषेभ्यः। सर्वथा न भेतव्यम्[2]।

शकुन्तलाया मदनलेखोऽपि प्रायेणानुकरोति रुक्मिण्याः प्रणयपत्रमिदम्। परिस्थितयस्तावत्सदृश्य एव तथापि सांस्कृतिकदृष्ट्या महदन्तरं वर्तते द्वयोरपि मदनलेखयोः। राजर्षेर्दुष्यन्तस्य विरहयोगे शकुन्तलाऽपि परित्यक्तजीवनाशा परिलक्ष्यते। तथा हि— 'तद्यदि वामनुमतं तथा वर्तेयां यथा तस्य राजर्षेरनुकम्पनीया भवामि। अन्यथाऽवश्यं सिञ्चतं मे तिलोदकम्।'

द्वयोरपि नायिकयोर्जीवनं संशयितं वर्तते परन्तु परिस्थितयो भिन्नाः। नन्दनन्दनमधिकृत्य प्रवर्तितं रुक्मिण्यनुरागभावन्तु निखिलोऽपि राजपरिवारस्सुष्ठु विजानाति। समेषामेषा बलवती स्पृहा प्रतीयते यदयं विवाहो निर्मक्षिकं सम्पन्नो भवेत्। केवलं पुनर्युवराजो रुक्मी विसंवदति विरुणद्धि च। रुक्मिणस्समक्षं न खलु वृद्धभूपतिर्भीष्मकः किञ्चित् प्रभवति। समापतिते सत्येवंविधे दुष्काले राजपुत्री रुक्मिणी स्वयमेवात्मरक्षणोपायं चिन्तयितुं प्रयतते। एवं खलु सा कन्योचितशीलसङ्कोचभावनायै तिलोदकं समर्प्य स्वकीयां मर्मच्छिद्व्यथां सविस्तरं लिखति। नैतावदेवाऽपितु हरणोचितावसरं हरणोपायञ्चापि मदनलेख एवोट्टङ्कयति।

परन्तु भारतीयसंस्कृतिमर्यादाया उदाररक्षकः कालिदासः शकुन्तलाचरिते नैतावत्प्रागल्भ्यं प्रकल्पते। शकुन्तलायास्तपस्विकन्योचितां लज्जां पुनरक्षतां कामयमा., व कविकुल-

---

१. 'यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो वाञ्छन्त्युमापतिरिवात्मत इन्त्यै। यर्ह्यम्बुजाक्ष। न लभेय भवत्प्रसादं जह्यामसून् व्रतकृशाञ्छतजन्मभिः स्यात्॥'

२. द्रष्टव्यं श्रीमद्भागवते ( उत्तरार्धे ५२। २, ३ )

गुरुः प्रियंवदामनसूयां वा तद्व्यथाया अनुभवित्रीं प्रस्तौति। प्राणानपि पणीकृत्य कण्वदुहिता स्वकीयं मनस्तापं प्रकाशयितुं न प्रभवेद् यदि तावत् प्रियंवदैव तस्मिन् सन्दर्भे नाग्रेसरी भवेत्। तथा हि—'अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला। किन्नु खल्वस्यास्तन्निमित्तोऽयमातङ्को भवेत् ?'

पृष्ठभूमिमिमामतिक्रम्यैवानसूया[1] प्रियंवदा[2] च जातनिर्बन्धे स्वमनोव्यथां किञ्चिदुद्घाटयितुं शकुन्तलां याचेते। मनोभवाग्निसन्तापस्य सुदुस्सहेऽपि तस्मिन् दुरनुभवे शकुन्तला प्रथमवारं मिहिकोपलेपमिवानुभवति, परन्तु वराकी सा स्वमनोऽभिप्रायं कथमिव प्रकटयेत् ? न खलु साऽलकापुरनिवासिनी शिखरिदशना श्यामा तन्वी[3]। सा त्वव्याजमनोहरवपुष्मती तापसबाला काचित्। पुण्यानामखण्डं फलं सा[4]। सा पुनरीदृशी मुग्धाङ्गनाऽकिञ्चित्करादपि मधुकरादात्मानं सन्त्रातुं न प्रभवति। तथा हि—'हला, परित्रायेथां मामनेन दुर्विनीतेन मधुकरेणाभिभूयमानाम्।' एवं सति कथं खलु शकुन्तला प्रणयभावोद्घाटनं स्वैरं कुर्यात् ? सकृद् भग्नप्रायं लज्जाबन्धनं किं पुनरपि व्यवस्थापयितुं शक्ष्यते ? न खलु कदापि।

नैषधीयचरितेऽपि भीमनृपात्मजा दमयन्ती नलं प्रत्यात्मनोऽनुरागभावं प्रकटयन्ती परं वैलक्ष्यमुपयाति। तद्यथाऽऽह महाकविः श्रीहर्षः—'का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा ?'

कन्योचितनिसर्गसंस्कारैर्मर्यादाभिश्च शृङ्खलिता शकुन्तला राजर्षिदुष्यन्तं प्रति निजानुरागं चातुरक्षिकं प्रकटयन्ती विचित्रमेव कमप्युभयतः पाशं स्फुटमनुभवति। किन्त्वनाख्यानेनापि हितं साधयितुं न शक्यते। आत्मरक्षणस्यात्मोपहासभयस्य च द्वैधजटिलेऽन्तर्द्वन्द्वे विपन्नं निषद्वरस्थमृगशावकायमाणं शकुन्तलायाश्चेतः कातरीभवति। तथा हि—

'(आत्मगतम्) बलवान् खलु मेऽभिनिवेशः। इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम्।....(प्रकाशम्) सखि ! कस्य वाऽन्यस्य कथयिष्यामि ? किन्त्वायासयित्रीदानीं वां भविष्यामि।'

---

१. 'कथय किन्निमित्तं ते सन्तापः। विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतीकारस्य।'

२. किमात्मन आतङ्कमुपेक्षसे ? अनुदिवसं खलु परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति।

३. द्रष्टव्यमुत्तरमेघे—'तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी' प्रभृतिपद्यम्।

४. द्रष्टव्यं शाकुन्तले १।१८, २।१० मितं पद्यम्।

एतावतीं विवक्षामविवक्षामुत्तीर्य, तर्कवितर्कमुत्प्रेक्ष्य, कृत्याकृत्यं विवेच्य, सख्योश्च स्निग्धसंरक्षणचन्द्रातपे छायातपविमिश्रितसुखमनुभूय शकुन्तला यथाकथञ्चित् स्वमनोभावमभिव्यनक्ति। परन्त्वन्तःकरणपर्वसु निसर्गसन्नद्धोऽत्रपाभावोऽर्ध एव मार्गं सङ्गं जहाति। तथा हि--'सखि ! यतःप्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः (इत्यर्धोक्ते लज्जां नाटयति )।'

प्रियंवदयाऽनसूयया च सस्नेहमाश्वासितैव शकुन्तला वैखरीप्रवणस्य मनसः पुरोवर्तिनं वृत्तान्तं निवेदयितुमुत्सहते। अयमेव कालिदासीयकविकर्मण उज्ज्वलतमः पक्षः। शीलमर्यादाऽऽवरणोपहितायां मुग्धस्वभावकन्यकायां प्रागल्भ्यकणिकामपि सन्द्रष्टुं न काङ्क्षति विद्योत्तमाजानिः। अचिरोपरूढयौवना पतिकामा पार्वत्यपि समारब्धे परिणयचर्चाप्रसङ्गे किं लीलाकमलपत्राणि न गणयामास ? किमर्थम् ? केवलं स्वोपज्ञलज्जावैवर्ण्यादिभावमपलपितुम्[1]। चिरकाङ्क्षितं वृषभध्वजमकस्मादेव समवेक्ष्यापि सा न ययौ न तस्थाविति दुर्दशामात्रमन्वभवत्[2]। स्वयंवरविधौ रघुनन्दनमजं यथोचितं वृत्वाऽपि वैदर्भीन्दुमती कथं कथञ्चिदेव लज्जां शालीनतां वा परित्यक्तुं प्राभवत्। तद्यथाऽह कालिदासः—

'ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ॥' रघु० ६।८०

'सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ॥' रघु० ६।८१

एवं हि सुस्पष्टमिदं यत्कालिदासीयकाव्यानां नायिकाः शीलसमुदाचारलज्जाकोमलतादिभावानां मूर्तयो वर्तन्ते। सत्यमिदं कामं यक्षिणीमधिकृत्य न चरितार्थीभवेत् यतस्सा सत्यपि पतिव्रता साध्वी कस्यचिदेवंविधसमृद्धिभोगिसमाजस्य सदस्या यः खलु पार्थिवसमाजाद् विलक्षणः। न खलु यक्षाणां यौवनादन्यत् किमपि वयः[3]। अतएव यौवनापगाया रिङ्गत्तरङ्गधाराष्वनवरतमवगाहमानास्ते निरन्तरमेव ललितवनिताभिस्सार्धं माध्वीमासेवन्ते[4], बहिरुपवनं निर्विशन्ति[5], पात्रीभवन्ति चाभिसाराणाम्।

अलकापुर्यां समस्तकामव्यवहाराणां प्रवर्त्तनं मनोज्ञवनिताकटाक्षैरेव सम्पाद्यते न खलु पुष्पधन्वा शरसन्धानार्थं जातु प्रयतते। एवं सत्युत्तरमेघनायिका यक्षिणी शकुन्तलेव हिमाचल-

---

१. 'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती ॥' कुमार० ६।८४.

२. द्रष्टव्यं कुमारसम्भवे—५।८५ मितं पद्यम्।

३. वित्तेशानां न च खलु वयो यौवनादन्यदस्ति (उत्तरमेघे)

४. 'उत्तमस्त्रीसहाया आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतम्।'

५. 'विबुधवनितावारमुख्यासहाया वैभ्राजाख्यं बहिरुपवनं कामिनो निर्विशन्ति।'

कन्यकेव वा न खलु लज्जावगुण्ठनवती चित्रिता। चटुलनयना स्तिमितनयनाऽसितनयना गुणवती चण्डी मानिनी चेति सा वर्तते।[१] शकुन्तलां प्रति तावत्कालिदासस्य यादृशी निरर्गलसहानुभूतिः सन्दृश्यते न तादृशी पार्वतीं यक्षिणीं मालविकामुर्वशीं वा प्रति।

कन्याभावमुपगता शकुन्तला यदि नीलोत्पलपत्रधारेव काचिदव्याजमनोहरवपुष्मती तापसबालाऽस्ति तर्हि पतिकामा सुवासिनी सती सा पुण्यानामखण्डं फलम्[२]! परिणीतारूपेण सा यदि मूर्तिमती सत्क्रिया[३] वर्तते तर्हि विरहविधुरारूपेण प्रत्याख्यातारूपेण वा शुद्धशीलैकवेणीधरा कुलाङ्गना परिलक्ष्यते।

यस्या अरण्यबालायाः कृते तपोवनस्थिता द्रुमक्षुपा एव सोदराः ( अस्ति मे सोदरस्नेहोऽप्येतेषु ), माधवीलतैव भगिनी ( तात! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ), मृगशावक एव पुत्रकः ( सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ), पितुरुत्सङ्ग एव जीवितसर्वस्वम् ( कथमिदानीं तातस्याङ्कात् परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि )। एवंविधायास्संस्कारानुप्राणितप्रणयिन्याः कृतेऽसंस्तुतजनाय कस्मैचिदज्ञातहृदयाय मदनलेखसम्प्रेषणं सर्वथा साहसमेवेत्यत्र न कश्चन सन्देहः। वस्तुतस्त्वेभिरेव सुसंस्कारैरन्तं यावदुपकृता धृता च शकुन्तला। कामव्यथायास्सुदुस्सहेऽपि सन्तापे न सा सस्कारजन्यं विवेकं परित्यक्तवती। तथा हि—'पौरव! रक्षविनयम्। मदनसन्तप्ताऽपि न खल्वात्मनः प्रभवामि।'

तथाप्यात्मरक्षाया अपरिहार्यस्थितौ विवशीभूय शकुन्तला राजर्षिदुष्यन्तं प्रत्यात्मनोऽनुरागभावं यथाकथञ्चित् स्वीकरोत्येव। प्रियंवदाया उपायकौशलं समर्थयन्ती सा मदनलेखमपि लिखितुं कृतप्रयत्ना संलक्ष्यते। अवशिष्ट आसीदयमेवैकस्सुकुमारप्रयोगः प्रणयनिवेदनार्थम्, परन्तु प्रेमपत्रस्य प्रतिपाद्येतिवृत्तं किं भवेत्? मदनलेखे पुनः ललितेन (सुन्दरेण) केनचित्पदबन्धेन (शब्दसमूहेन, Composition इत्यांग्लभाषायाम्) भवितव्यमिति प्रियंवदायाः प्रस्तावः। स्वनामोल्लेखोऽपि स्यादिति सौष्ठवमपरम्। कथं पुनरात्माभिधानोल्लेखं विना स्वाभिप्रायनिवेदनं सम्भवेत्? अस्माच्च सर्वथाऽऽवश्यक आत्मोपन्यासः। प्रियंवदा यथा भणति—'तेन हि आत्मन उपन्यासपूर्वं चिन्तय तावत्किमपि ललितपदबन्धम्।'

वियोगिनो यक्षस्य विरहविधुरा भार्याऽपि गेयमीदृशमेवैकं गातुकामा संल्लक्ष्यते, यस्मिन् पदनिकुरम्बं सुविचार्य सम्यगवधार्य च प्रयुक्तं वर्तते। गीते तस्मिन्नभिधानमपि

१. द्रष्टव्यमुत्तरमेघे– यक्षिणीसम्बोधनम्।

२. शाकुन्तले १।१८ तथा २।१० मितं पद्यम्।

३. शाकुन्तले ५।१५ मितं पद्यम्।

राजराजसेवकस्य निहितम्। सुविचार्यं सम्यगवधार्यं चेति पदद्वयस्यायमेवाशयो यद् गीत-प्रयुक्तानि पदानि वियोगभावं सम्बोधितुं प्रभविष्णूनि विरहभावनासंवादीनि वा वर्तन्ते। तथा हि—'मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।'

यक्षिणीगीतस्य शकुन्तलामदनलेखस्य च पद्धतिस्तुल्यैवेति मन्मतम्। स्वविस्मृति-परायणं कान्तं सम्बोध्य यक्षिणी किञ्चिद् गीतं गातुमिच्छति तस्मादेव गीते तस्मिन् यक्षनामो-ल्लेखोः ( गोत्राङ्कः ) वर्तते। दुष्यन्तमधिकृत्य शकुन्तलायाः पुनर्न कोऽपीदृशोऽधिकारो वरीवर्ति। प्रथममेव तावत्तयाऽऽत्मनः प्रणय एव निवेदनीयः। तदपि निवेदनं किल संशयित-याऽऽस्थया निचितं वर्तते। तस्मादेव शकुन्तला भणति—'हला, चिन्तयाम्यहम्। अवधीरणाभीरुकं पुनर्वेपते मे हृदयम्।'

एवं हि शकुन्तलाया मदनलेख आत्मोपन्यास एव प्रधानं सन्दृश्यते। स्वाभिप्रायविनि-वेदनमेवात्र प्रभवति। तथापि चिन्त्यमिदं यदसौ दुष्यन्तस्य कृते निर्घृणेति पदं व्यवहरति।

यक्षिणीगीतस्य मदनलेखस्यास्य च द्वितीय-पक्षस्साम्प्रतं निभाल्यते। काऽनयोः प्रतिपादनशैली ? अत्रापि प्रायस्समरूपतैव। गेयं तावद्विरचितपदं येनैतदुक्तं भवति—विशेषेण रचितानि वियोगभावोद्दीपनार्थं प्रयुक्तानि तदनुकूलानि पदानि यस्मिंस्तदिति। अपरतस्तावच्छकुन्तलायाः प्रणयपत्रं ललितपदबन्धनं वरीवर्ति। आकर्षकं रमणीयमिति वा ललितशब्देन सङ्केत्यते। इदमाकर्षणं रमणीयतेयं वा कस्य पदार्थस्येति प्रश्ने समुज्जृम्भमाणे प्रस्तूयते समाधानं यत्प्रणयनिवेदनमदः प्रकटीकुर्वाणानां पदबन्धानामेव मानोज्ञकमिदम्। मातः भिक्षां देहीति, पितुः प्रियतमे ! भिक्षां देहीति वाक्यद्वयस्य परमार्थतासिद्धे सत्यप्यौचित्ये क्वचिल्लालित्यं प्रस्फुरति क्वचिच्च सप्रयासमपि द्रष्टुं न शक्यते। एवं हि प्रणयपत्रेऽपि तादृशैरेव शब्दैर्भवितव्यं यैरनौचित्यं न किञ्चिदुद्भवेत्। तद्यथाऽऽचार्यो भणति—'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्'। साम्प्रतं सिद्ध्यति यल्लालित्यं गीतवस्तुन एव निर्दिश्यतेऽत्र। पुरोवर्तिनि सन्दर्भे शकुन्तला स्वयमपि भणति—'हला, चिन्तितं मया गीतवस्त्विति।'

शुकोदरकोमले कमलिनीपलाशे करुहैर्मदनलेखाक्षराणि साभिनिवेशं कण्वनन्दिन्या समुत्कीर्यन्ते। तथा हि—

'तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रावपि।
निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि ॥' इति।

अवितथमेवेदमात्मोपन्यासमात्रम् ! अन्यथा दुष्यन्तस्तु प्रथमदर्शनादेवारभ्य शकु-न्तलार्पितचित्तव्यापारोऽवलोक्यते। तदन्तःकरणेऽप्यार्यमनसः सङ्कल्पः प्रभूतचिरकालादेव

बद्धमूलस्सञ्जातः[1]। निभृतनिभृतमन्तर्मनसैव निश्चितमपि तेनास्मिन् विषये[2]। आश्वासनमपि समाश्रितमिति दिक्।

भारतीयसंस्कृतेस्समुदाचारस्य च निर्वाहो मदनलेखस्यास्यैकैकस्मादक्षरात्प्रकटीभवति। किमिदं सत्यं यच्छकुन्तला दुष्यन्तस्य हृदयं न जानाति? किं सत्यमेव नो जानाति? यद्येवं चेत्तर्हि किमासीत्तत् यच्चातुरक्षिके प्रथमसङ्गमन एव शकुन्तलाविवाहमधिकृत्य दुष्यन्ते सोत्कण्ठं पृच्छेयमुपकल्पिता—'इति सखीं ते ज्ञातुमिच्छामि। वैखानसमित्यादि' (शाकुन्तलस्थं १।२७ मितं पद्यम्)। वृक्षसेचनसन्दर्भेऽपि यत्तेन स्वनामाङ्कितमङ्गुलीयकं प्रदाय शकुन्तला ऋणमुक्ता कृता यद्वा मृगयाविहारिणं तं नरपतिं नयनविषयीकृत्य यच्छकुन्तलयाऽपि मधुरमव्यक्तं किञ्चिदनिर्वचनीयमनुभूतं[3] यच्च प्रियंवदाया नर्मवचनैर्जातरोषयाऽथ च दूरापगतया दुष्यन्तजन्यो महामोहपाशोऽनुभूत[4]स्तत्सर्वं किमासीत्? किमेतावताऽपि शकुन्तलां प्रति राजर्षेरनुरागो नाभिव्यक्तः? कथन्तर्हि मुधा विजल्प्यते 'तव न जाने हृदयमि'ति।

सम्प्रत्युच्यते। नात्र कश्चित्संशयो यच्छकुन्तला दुष्यन्तहृदयं सम्यग् विजानाति। दुष्यन्त इव सापि प्रथमदर्शनादेव तदर्पितचित्तवृत्तिः। कियत्य एवोत्कण्ठास्तस्याश्चेतसि जायन्ते दुष्यन्तमधिकृत्य। हन्त भोः! सर्वथैव विवशा सा वराकी। स्वयमेव किञ्चित्प्रष्टुं न शक्नोति। भवतु नाम। अनसूयैव प्रक्ष्यति—

'(आत्मगतम्) हृदय मोत्ताम्य। एषा त्वया चिन्तितान्यनसूया मन्त्रयते।'

एवं हि विज्ञातराजर्षिहृदयाऽपि शकुन्तलाऽऽश्रमोचितसंस्काराभिनिवेशवशात् कन्योचितशीलमर्यादानुपालनवशाच्च स्वकीये मदनलेखेऽज्ञातदुष्यन्तहृदयत्वं शंसते। संस्कृतिसमुदाचारपक्षपाति कविकुलगुरुकवित्वमत्र प्रभवति।

अवशिष्टमदनलेखे तु शकुन्तलायाः हृदयाभिव्यक्तिः। वस्तुतोऽयमेवात्मोपन्यासः। आत्मोपन्यासस्यास्येदमेव लालित्यं सौन्दर्यं वा यदात्मव्यथासन्तापो न प्रत्यक्षरीत्याऽपि तु पञ्चशरवैतवेनात्र समुपस्थापितः। मदनलेखेऽस्मिन् शकुन्तलाकर्तृकं निरर्गलप्रीतिस्वीकरणं

---

१. शाकुन्तले द्रष्टव्यम्—१।२२ मितं पद्यम्।

२. '(आत्मगतम्) लब्धावकाशो मे मनोरथः। ....अथवा लब्धावकाशा मे प्रार्थना (१।४१)।'

३. 'किन्तु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता?'

४. 'यद्यात्मनः प्रभविष्यामि, (प्रकाशम्) का त्वं विसृष्टव्यस्य रोद्धव्यस्य वा?'

विद्यते यस्तयाऽऽत्ममनोरथो दुष्यन्त एव वृतः। सा खलु राजर्षिं दुष्यन्तं प्रति स्वकीयं कान्ताभावमङ्गीकरोति, परन्तु न प्रत्यक्षम्।

प्रणयनिवेदनेऽस्मिन्नग्रेसरीभवितुं शकुन्तलैव पुरस्ससारेतिकृत्वा मन्ये मुनिदुहिता सरभसं खिद्यते। वस्तुतस्तु पुरःसरणमिदं तस्याः कोमलाङ्ग्याः पराजय एव। मनोव्यथां ज्ञातुं कः प्रभवेत् यदि नाम सा वाग्व्यवहारैर्न स्फुटीक्रियेत। अत्रापि दैवेन न तस्यास्साहाय्यं कृतम्। कथन्न खलु दुष्यन्त एव स्वहृदयोद्घाटनेऽग्रेसरीबभूव ? हस्तिनापुरनरेशोऽसौ। सार्वभौमसम्राट् चतुरुदधिश्यामसीमाधरित्र्याः। पुनश्च सर्वाभिभावि तथ्यमिदं यदसौ पुरुषः।

धाष्ट्र्यमपि शोभते कदाचित्पुरुषे। प्रागल्भ्यमपि कदाचित्तं मण्डयत्येव। स्वकीयं प्रणयभावं स्फुटयितुं किमासीत्काठिन्यं तस्य ? एवम्भूतेऽप्यसौ नैतावच्छोचितुमपारयद्यदसौ निसर्गलज्जाप्रवणा शीलसङ्कोचमर्यादावगुण्ठनपटीयसी प्रकृतिसुकुमारा तापसबाला स्वकीयं चिरसंस्तुतं स्वभावं परित्यज्य, स्वगाम्भीर्यमपोह्य, स्वरहस्यं प्रख्याप्य, स्वतिरोहितमनोभववेदनां विनिवेद्य स्वजनमध्ये कियत्सारहीना भविष्यति, कियन्तमुपहासमवाप्स्यति ?

सत्यमेव न दयालेशोऽपि वर्तते राजर्षौ ! अन्यथा कथं खलु पूर्वानुरागमेतावन्तं सङ्केत्य मौनमवलम्बते ? उभयसाधारणे सति प्रेम्णि पुरुषस्यैव नेतृत्वं चकास्ति न खल्वपत्रपाङ्गवारणस्य स्त्रीजनस्य।

शङ्के, यदाभिरेवानुभूतिभिः प्रेङ्खोलिता सती शकुन्तला दुष्यन्तं निर्घृणं व्याहरति। शब्देऽस्मिन्नेकतस्तावत् मधुरस्तिरस्कारोऽपरतः पुनः स्नेहसिक्तस्समुपालम्भोऽपि शराज्यते।

•

इन्दुं कैरविणीव कोकपटलीवाम्भोजिनीबान्धवं
मेघं चातकमण्डलीव मधुपश्रेणीव पुष्पाकरम्।
माकन्दं पिकसुन्दरीव तरुणी प्राणेश्वरं प्रोषितं
चेतोवृत्तिरियं मम प्रियसखे ! त्वां द्रष्टुमुत्कण्ठते ॥

—शार्ङ्गधरपद्धतौ

# महाकविकालिदासस्य काव्येषु परिवारकल्याणम्

डॉ० रामाशीषपाण्डेयः

परिवारकल्याणमिति शब्दः भारतवर्षे विशेषतो विंशत्यां शताब्द्यां सातिशयेन प्रचलितो वर्तते परं परिवारस्य कल्याणमिति व्युत्पत्त्या गृहीतार्थसम्पन्नः शब्दोऽयं प्राचीन-कालेष्वपि आसीत्। परिवारकल्याणस्य रूपद्वयं विद्यते-पुत्राय हितचिन्तनं परिवारनियोजनञ्च। पुत्राय हितचिन्तनमपि प्रधानतया द्विधा विभक्तम्— प्रथमं पुत्रस्योत्पादनं द्वितीयं सञ्जातस्य पुत्रस्यावश्यकसंरक्षणञ्चेति।

काव्येषु सामाजिकस्थितेश्चित्रणं भवत्येव यतो हि साहित्यं समाजदर्पणरूपेण स्वकीयस्य समाजस्य यथार्थरूपमभिव्यनक्ति। यद्यपि कवेः कल्पनायोगात् पुनः विभावानुभाव-सञ्चारिसंयोगाच्च काव्यरसस्यास्वादनं प्रधानप्रयोजनं तथापि देशकालपात्राणां चित्रणं कवेः तज्जन्यं स्वानुभूतेरुद्भावनञ्चातितरां स्पष्टं भवति तस्य काव्येषु। महाकविकालिदासस्य काव्येष्वपि स्थितिः प्रकृतपथानुगामिनी एव। अतः प्राप्तवर्णनानुसारेण कविवरस्य काव्येषु परिवारकल्याणस्य कीदृशं स्वरूपमासीदिति विवेचनं प्रस्तूयते—

परिवारकल्याणस्याद्यं प्रयोजनमस्ति पुत्राय हितचिन्तनम्, तत्रापि प्रथमं पुत्रस्योत्पादनं विद्यते यतोहि पुत्रस्योत्पादनं सृष्टेः सञ्चालनार्थं विश्वविश्रुतो धर्मः। एतस्योपयोगित्वं सर्वत्र धर्मग्रन्थेषु वर्णितमस्ति। पुत्रस्योपयोगित्वमैतरेयब्राह्मणे यथा—

"ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः॥
शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः
आत्मा हि यज्ञ आत्मनः स इरावत्यतितारिणी॥

किन्नु मलं किमजिनं किमु श्मश्रूणि किं तपः
पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः ॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः
सखा ह जाया कृपणं ह दुहिता ज्योतिर्हं पुत्रः परमे व्योमन् ॥
पतिर्जायां प्रविशति गर्भो भूत्वा ह मातरम्
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
तज्जाया जाया भवति यदस्यां जायते पुनः
आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥
दैवाश्चैतामृषयश्च तेजः समभरन्महत्
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥
नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः
तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति ॥
एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोका
तं पश्यन्ति पशवो वयांसि च तस्मात्ते मात्रापि मिथुनीभवन्ति ॥"

( ऐत० ब्रा० ३३/१/१–१० )

महाकवि-कालिदासः संस्कृतसाहित्याकाशे परमोज्ज्वलदीपक इति प्रायेण सर्वे प्राच्य-पाश्चात्यविपश्चितः स्वीकुर्वन्ति। सुकुमारशैल्यां रचितेषु प्रसादगुणान्वितेषु व्यङ्ग्यार्थप्रधानेषु महाकवेरस्य श्रव्यकाव्येषु रघुवंशं कुमारसम्भवं मेघदूतमिति काव्यत्रयं विश्रुतम्। ऋतुसंहारोऽपि श्रव्यकाव्यान्तर्भूता कालिदासस्य प्रथमा कृतिरिति प्रसिद्धम्। दृश्यकाव्येष्वभिज्ञानशाकुन्तलं विक्रमोर्वशीयं मालविकाग्निमित्रञ्चेति। महाकविकालिदासस्य प्रथितं महाकाव्यं रघुवंशमेव प्रथममवलोकनीयं पुत्रोत्पत्तिविषयकं विचारमवबोधयितुम्। महाकाव्यस्यास्य प्रथमे सर्गे राजा दिलीपः पुत्रेच्छया महर्षेर्वशिष्ठस्याश्रमं गच्छति--

"अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया
तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥" ( रघु० १/३५ )

तत्र गत्वा पुत्राभावजन्यं दुःखं गुरवे प्रकटयति—

"किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम्
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥" ( रघु० १/६५ )

राजा पुत्रस्योपयोगित्वमपि तत्रैव गुरवे प्रतिपादयति।[1]

---

१. रघु० १/६६, ६७, ६८, ६९।

वशिष्ठादिष्टस्य गोसेवातत्परस्य राज्ञो दिलीपस्य चान्ते पुत्रोत्पत्तिर्भवति । तत्र नन्दिन्याः सेवा एव प्राधान्येन कारणं प्रतिपादितम्, परं नन्दिन्याः प्रभावः, वनप्रान्ते विहरणं, हिमालय-प्रदेशस्य वायुसेवनम्, गोचारणेन मेदोदोषपरिहारः, नन्दिन्याः दुग्धपानञ्चेमानि[1] कारणान्यपि सम्भावितानि । परिणामतस्तस्य सुदक्षिणायां रघुनामकः पुत्रोऽभवत् यस्य नाम्ना रघुवंशमहा-काव्यमिदं विराजते । अतः परिवारकल्याणाभिनिवेषगतत्परेण महाकविना पुत्रहीनस्य राज्ञो दिलीपस्य पुत्रावाप्तये गोसेवारूपविहितोपचारस्य व्यवस्थापनं कृतम् ।

रघुवंशमहाकाव्ये प्राप्तवर्णनानुसारेण राज्ञो दशरथस्य कौसल्याकैकेयीसुमित्रेति तिस्रः पत्न्यः सुविदिताः, परं बहुकालं यावत् सः पुत्रहीनोऽतिष्ठत् । अन्ते पुत्रेच्छया पुत्रेष्टियागं चकार—

"ऋष्यश्रृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः ॥" ( रघु० १०/४ )

यज्ञान्ते चरुप्रदानेन तस्य राज्ञस्तिस्रः पत्न्यो गर्भयुक्ता अभूवन् यथासमयञ्च कौसल्या रामनामकं पुत्रमजीजनत्, कैकेयी भरतनामकं तथा सुमित्रा लक्ष्मणशत्रुघ्ननामकौ पुत्राव-जीजनदिति ।

परिवारकल्याणविषये पुत्राय हितचिन्तने द्वितीयं प्रयोजनमस्ति पुत्रस्याभिवृद्धये पितुः प्रयत्नो यथावश्यकव्यवस्थापनञ्च । पुत्रस्य लालनं पालनं तु सर्वातिशयं महत्त्वपूर्णं विद्यते । बालस्य शारीरिकमानसिकविकासाय यथावश्यकं साधनमपेक्षितमिति सर्वदा सर्वैः स्वीक्रियते । रघुवंशमहाकाव्ये स्वकीयस्य रघुनाम्नः पुत्रस्य शारीरिकमानसिकविकसाय पित्रा राज्ञा दिलीपेन सम्पादितः प्रयत्नः प्रेक्षणीयः—

"पितुः प्रयत्नात्स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥" ( रघु० ३/२२ )

पुत्रोत्पत्तेः पूर्वमापन्नसत्त्वायाः कृते यथावश्यकं प्रबन्धो विधेयस्तथा च तदवस्थायां गर्भपोषणार्थं सम्यक् प्रयतितव्यं यतो हि बालकस्य जीवनन्तु तस्योपरि आधृतं वर्तते । रघुवंशमहाकाव्ये राजा दिलीपः पुंसवना[2]दिकां क्रियां शास्त्रविधानेन सम्पाद्यानुवेलं सुदक्षिणाया वाञ्छितं ज्ञातुं चेष्टते—

"न मे ह्रिया शंसति किञ्चिदीप्सितं स्पृहावती वस्तुषु केषु मागधी
इति स्म पृच्छत्यनुवेलमादृतः प्रियासखीरुत्तरकोशलेश्वरः ॥" ( रघु० ३/५ )

---

१. रघु० २/६५
२. रघु०—३/१०

गर्भावस्थायां रामेण परित्यक्ता सीता विलपन्ती महर्षेर्वाल्मीकेराश्रमं प्रापिता। महर्षि-वाल्मीकिः एतादृशीं दोहदलक्षणसम्पन्नां सीतां दृष्ट्वा सुपुत्रार्थमाशिषं दत्तवान्—

"तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राशिषमित्युवाच ॥" (रघु० १४/७१)

आपन्नसत्त्वायाश्च सीतायाः मनोविनोदाय गर्भपोषणाय च स महर्षिर्यथोचितानु-पायान् सम्पादयति कथयति च—

"अशून्यतीरां मुनिसन्निवेशैस्तमोपहन्त्रीं तमसां वगाह्य
तत्सैकतोत्सङ्गबलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ॥" (रघु० १४/७६)

पुनश्च—

"पुष्पं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥" (रघु० १४/७७)

गर्भाधानतः परिणयपर्यन्तं शास्त्रानुसारेण षोडश[1] संस्काराः प्रतिपादिताः। उत्पन्नस्य पुत्रस्य कृते जातकर्मचौलाक्षरारम्भोपनयनादिसंस्कारा विहितास्तथा पुत्राभिवृद्धय एव प्रतिपादिता, येन संस्कारसम्पन्नः पुत्रः स्वकीयजीवने सर्वासु दिक्षु विकासपथमारूढो भवति। कालिदासस्य काव्येष्वपि एतेषां संस्काराणां वर्णनं विद्यते। रघुवंशमहाकाव्ये रघो-र्जन्मनः पश्चात्तस्य जातकर्मसंस्कारस्य वर्णनं यथा—

"स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ ॥" (रघु० ३/१८)

"चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥"

इति मनुस्मृतौ प्राप्तवर्णनेन चूडाकर्मणः समयो ज्ञायते पुनश्च विद्यारम्भविषयेऽपि तत्रैव—"प्राप्ते तु पञ्चमे वर्षे विद्यारम्भं च कारयेत्" इति निर्दिष्टम्। यथासमयं बालकाश्चौलविद्यारम्भादिसंस्कारेण संस्कृता भवेयुरिति तद्विषयेऽपि कालिदासस्य काव्ये-षूल्लेखः प्राप्यते—

"स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः
लिपेर्यथावद्ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत् ॥" ( रघु० ३/२८ )

---

१. "गर्भाधानमतश्च पुंसवनकं सीमन्तजाताभिधे,
नामाख्यं सह निष्क्रमेण च तथाऽन्नप्राशनं कर्म च।
चूडाख्यो व्रतबन्धकोऽथ चतुर्वेदव्रतानां पुनः,
केशान्तः सविसर्गकः परिणयः स्यात् षोडशी कर्मणाम् ॥" ( संस्कारभास्करे )

उपनयनसंस्कारोऽपि बालाभिवृद्धये स्मृतौ वर्णितः। तस्य समयनिर्धारणं यथा—

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्
गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥" —( मनुस्मृतौ )

रघुवंशमहाकाव्ये बालकस्य रघोरुपनयनसंस्कारेण संस्कृतस्याध्ययनव्यवस्था क्रियते। परिणामतस्तस्य शिक्षका अपि अध्यापने सफलप्रयत्नाः सञ्जाताः—

"यथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम्
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥" (रघु० ३/२९)

एवमेव रघोः प्रायेण सर्वे संस्कारा रघुवंशमहाकाव्ये उपनिबद्धाः।

महर्षिवाल्मीकिरपि उत्पन्नयोः सीतापुत्रयोः कुशलवयोर्जातकर्मादिसंस्कारं सम्पादयति—

"सखा दशरथस्यापि जनकस्य च मन्त्रकृत्
संचस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ( रघु० १५/३१ )

दशरथस्य जनकस्य च सखा मन्त्रद्रष्टा वाल्मीकिरपि उभयोर्दशरथजनकयोः प्रीत्या मैथिलेयौ लवकुशौ यथाविधि संचस्कार जातकर्मादिभिः संस्कृतवानिति।

अभिज्ञानशाकुन्तलनाटकेऽपि कुमारभरतो जातकर्मादिसंस्कारेण संस्कृत इति प्राप्यते—

"प्रथमा —सुणादु महाराओ। एसा अवराजिदा नाम ओसही इमस्स जातकम्मसमए भअवदा मारीएग दिण्णा। एदं किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदंण गेण्हादि।" ( शृणोतु महाराजः। एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति। )
—( अभि० शा० अङ्कः-७ )

विक्रमोर्वशीयेऽपि कुमारायुषो जातकर्मसंस्कारो भगवता च्यवनेनानुष्ठित इति प्राप्यते—

"तापसी—सुणादु महाराओ। एसो दीहाऊ आउजादमेत्तो एव्व उव्वसीए। किं वि णिमित्तं अवेक्खिअ मम हत्थे णासीकिदो जं खत्तिअकुमारअस्स जादकम्मादिविहाणं तं से भअवदा चवणेण असेसं अणुच्चिट्ठिदं। गहीदविज्जो धणुव्वेदे अहि विणीदो।" ( शृणोतु महाराजः। एष दीर्घायुर्जातमात्र एव उर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः। यत्क्षत्रियकुमारस्य जातकर्मादिविधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम्। गृहीतविद्यो धनुर्वेदेऽभिविनीतः। ) —( विक्र० अङ्कः-५ )

एवमेव महाकवेरस्य काव्येषु प्रायेण पुत्रस्य संरक्षणार्थं विकासाय च शास्त्रविहितोपायाः प्रतिपादिता ये परिवारकल्याणाय सर्वार्थसाधका भवन्ति।

परिवारकल्याणस्यान्तिमं सर्वाधिकमहत्त्वपूर्णञ्चास्ति प्रयोजनं परिवारनियोजनम्। परिवारकल्याणाय नियोजितस्य परिवारस्य महत्त्वमतितरां प्रशंसनीयम्। परिवारनियोजने

देशकालानुरूपं परिवारस्य नियोजनं संख्यानिर्धारणमपेक्षितं भवति। विषयेऽस्मिन्निदमेव कथनमुचितं यत्—

"वरमेको गुणी पुत्रो न च मूर्खशतैरपि
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥" (हितो॰ मित्र॰ १७)

बहुसंख्यायामुत्पन्नाः पुत्रा यदि शिक्षया रहिता भवेयुः, भोजनावासादीनां व्यवस्था तेषां कृते यदि न भवेत्, राजमार्गे आपणकुक्कुरा इवोच्छिष्टान्नग्रहणाय परस्परं कलहायमाना भवेयुस्तर्हि तत्समैः पुत्रैः को लाभः? पुनश्च द्वित्रा विद्वांसो लोकहित-साधका देशसेवा-तत्परा न केवलं स्वकुलं विभूषयन्ति अपि तु स्वदेशस्य गौरवमपि वर्धयन्ति[1]।

महाकविकालिदासेन स्वकाव्येषु पुत्रस्यैकस्याप्रतिमप्रतिभान्वितस्य पक्षे प्राथम्यं प्रदर्शितम्—

"उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥" —( रघु॰ ३/२३ )

उमावृषाङ्कौ पार्वतीपरमेश्वरौ शरजन्मना कार्तिकेयेन स्वकीयपुत्रेण यथा ननन्दतुः, शचीपुरन्दरौ जयन्तनाम्ना पुत्रेण यथा ननन्दतुस्तथा तेन प्रकारेण सा मागधी नृपो दिलीपश्च कुमारजयन्ताभ्यां सदृशेन पुत्रेण रघुणाऽऽनन्दं प्रापतुः। प्रस्तुते श्लोके एकपुत्रत्वस्य प्राधान्यं लक्ष्यते।

---

१. "को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः।
वरमेको कुलालम्बी यत्र विश्रूयते पिता ॥" ( हितो॰ मित्र॰ २० )
"कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः।
काणेन चक्षुषा किं वा चक्षुः पीडैव केवलम् ॥
अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥
स जातो येन जातेन याति वंशः समुन्नतिम्।
परिवर्तिनि संसारे मृतः को वा न जायते ॥"
—( हितो॰ मित्र॰ १२–१४ )

"एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना।
वनं सुवासितं सर्वं सुपुत्रेण कुलं यथा ॥
एको हि गुणवान् पुत्रो निर्गुणेन शतेन किम्।
चन्द्रो हन्ति तमांस्येको न च ज्योतिः सहस्रशः ॥" —( गरुडपुराणम् )

रघुवंशमहाकाव्ये वर्णनानुसारेण राज्ञः रघोरजनामकः पुत्रः, राज्ञोऽजस्य च दशरथनामकः एक एव पुत्रोऽभवत् । एवं कुशस्यातिथिरतिथेर्निषधो निषधस्य नलो नलस्य नभो नभस्य पुण्डरीकः पुण्डरीकस्य क्षेमधन्वा तस्य देवानीकस्तस्यापि अहीनगुस्तस्य पारियात्रः पारियात्रस्य शिलः शिलस्योन्नाभ उन्नाभस्य वज्रनाभो वज्रनाभस्य शंखणस्तस्य राज्ञोप्युषिताश्वस्तस्यापि विश्वसहस्तस्य हिरण्यनाभस्तस्य कौशल्यस्तस्य ब्रह्मिष्ठस्तस्य पुत्रनामकः पुत्रस्य पुष्यः पुष्यस्य ध्रुवसन्धिर्ध्रुवसन्धेः सुदर्शनः सुदर्शनस्याग्निवर्ण इति एकैकस्य पुत्रस्य वर्णनं विद्यते । कुमारसम्भवमहाकाव्ये कुमारस्य कार्तिकेयस्य उत्पत्तिर्वर्णिता यः कुमारो विश्वकल्याणाय देवसेनापतिपदमलञ्चकार, अन्ते च तारकासुरं जघान । अभिज्ञानशाकुन्तलनाटकेऽपि राज्ञो दुष्यन्तस्य भरतनामकश्चैकश्चक्रवर्ती कुमारः विश्रुतो यस्य नाम्ना भारतदेशोऽयं विराजते । विक्रमोर्वशीयेऽपि राज्ञः पुरूरवस आयुषनामकश्चैकः पुत्रो वर्णितः । क्रमेण मालविकाग्निमित्रेऽपि राज्ञोऽग्निमित्रस्यैकः पुत्रः कुमारो वसुमित्रनामा आसीदिति प्राप्यते ।

महाकवेः काव्येषु पुत्रद्वयस्यापि वर्णनं विद्यते । रघुवंशमहाकाव्ये प्राप्तवर्णनेन राज्ञः रामस्य द्वौ पुत्रावास्ताम्—

"स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥" (रघु० १५/३२)

सः कविर्वाल्मीकिः कुशैः दर्भैर्लवैर्गोपुच्छलोमभिरुन्मृष्टो गर्भक्लेदो गर्भोपद्रवो ययोस्तौ मैथिलेयौ तेषां कुशानां च लवानाञ्चाख्यया नामतो नाम्ना यथासंख्यं कुशलवावेव चकार किल ।भरतस्यापि द्वौ पुत्रौ सञ्जाताविति प्राप्यते—

"स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः ।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥" (रघु० १५/८६)

लक्ष्मणस्यापि तत्रैव द्वौ पुत्रौ वर्णितौ—

"अङ्गदं चन्द्रकेतुञ्च लक्ष्मणोऽप्यात्मसम्भवौ ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥" (रघु० १५/९०)

एवमेव शत्रुघ्नस्यापि द्वौ पुत्रौ आस्तां सुबाहुर्बहुश्रुतश्च । अनेन वर्णनेन पुत्रद्वयस्य स्थितिः स्पष्टतो दृष्टिपथमायाति या परिवारकल्याणायेति ।

अतः समासेन कथनमिदं सर्वथा युक्तियुक्तं यत् परिवारकल्याणस्य यान्यङ्गानि सम्भावितानि तानि महाकवेः काव्येषु सामान्यरूपेण प्रतिपादितानि सन्ति । परिवारकल्याणाय प्रतिपादितान्येतानि तत्त्वानि राष्ट्रकल्याणाय विश्वकल्याणाय च सन्देशरूपाणीति दिक् ।

# दीपमालिका

## [सरस-मधुरा, प्रसन्नकोमला, अनुप्रासमयी, अभिनवसूक्तिमालिका]

वासुदेवद्विवेदी शास्त्री

## प्रास्ताविकं किञ्चित्

अथेयं दीपमालिका नाम एका अभिनव-विरचितानां सूक्तीनां मालिका प्रकाश्यते सम्प्रति। तदेतत् सूक्तिसाहित्ये खलु एकं सर्वथाऽसमानं नूतनमवदानम्। यद्यपि संस्कृतवाङ्मयं नाम सूक्तीनामपारो भाण्डागारः। प्रत्नानि नूतनानि च अत्र पूर्वत एव विराजन्ते सुबहूनि सुभाषितग्रन्थरत्नानि। नास्ति विचारजगतः सूक्ष्मोऽपि तादृशः कश्चिदंशो यः प्रशंसनीयतया न समुपन्यस्तो भवेत् सूक्तिकारैः। अतएव केचिज्जनाः पृच्छन्ति—कोऽयमलक्ष्ये बाणनिक्षेप इव अभिनवसूक्तीनां निर्माणस्य अनावश्यकः प्रयासः इति। सत्यमिदम्, वस्तुतः संस्कृतभाषाया असाधारणं सूक्तिसाहित्यम्। परं, भद्राः! भोजन-प्रकाराणामिव, मानस-विकाराणामिव, रमणी-शृंगाराणामिव विचाराणामपि अन्तः क्व? विचाराः खलु सागरे तरंगा इव सहस्रशः समुल्लसन्ति, गगने विहंगा इव सुदूरमुत्पतन्ति, जीवने प्रसङ्गा इव च इयत्तामतिक्रामन्ति। तद् यदि कस्यापि नवीनस्यापि अभिनवोन्मेषशालिनी प्रतिभा कलावती मालिनीव अभिनवाः सूक्तिस्रजो ग्रथ्नाति न तेन स दोषस्य भाजनं भवितुमर्हति न वा रोषस्य विदुषाम्। सर्वथा चायं वीथी-सञ्चार इव संकीर्णो विचारः केषाञ्चित् जनानां यत् कुशाग्रबुद्धिना द्रुतेन इव न किञ्चिदवशेषितं भूतेन वर्तमानाय भविष्यते वा वक्तुम्। सर्वं खलु प्राचीनमेव समीचीनं नवीनं तु सर्वं हीनमेवेति दीना गिरो वदन्तः स्वकीयस्य बुद्धिवैभवस्य अन्तमेव प्रदर्शयन्तीत्यत्र कः खलु संशयः! तदेषोऽपि साधीयान् एव प्रयासः सूक्तीनां नूतनोपन्यासस्येति स्वमुखेनापि कथने न काऽपि विप्रतिपत्तिः प्रतिभाति मे मनसः।

अपरञ्च पुरातनान्यपि वस्तूनि यदि नूतनतया सन्निवेशितानि भवन्ति तर्हि आधुनिक-भोजनालयेषु परिवेषितानि भोजनपानानीव कमपि अपूर्वमेव चमत्कारं जनयन्ति। यथा एक एव नटः कपट इव विविधवेषभूषासुसज्जितो भूत्वा नवनव इव सामाजिकानां मनांसि रञ्जयति तथैव पुरातनोऽपि भावः प्रतिपादन-वैशिष्ट्यप्रभावात् नूतनमिवात्मानं अभिव्यञ्जयति। तदेषाऽपि रचना अशेषेभ्यः सूक्तिग्रन्थेभ्यो नूनमेव किञ्चिद् अपूर्वतामावहतीति निर्बाधमेव विदग्धानां विनोदसाधनं जायेत।

तत् का सा अपूर्वता एतस्य ? श्रूयताम्—

प्रथमतस्तु सर्वाऽपि इयं रचना अन्तपर्यन्तमनुप्रासमयीति पठने तथा आकर्णनेऽपि नितान्तं मनोहारिणी चमत्कारिणी च। नूनमेव मैत्री यथा लोकसमुदाये तथा वर्णसमाम्नायेऽपि परमं प्रमोदमुत्पादयति। अनुप्रासमयी रचना खलु सुविलासमयी वचनावलीव सर्वेषामपि सविशेषमानन्ददायिनी भवति। सा न केवलं सहृदयानामेव आनन्दसुधावर्षिणी अपि तु पामराणामपि आकर्षिणी तथा बालानामपि मनःप्रहर्षिणी भवति।

पुनश्च इमाः सर्वा अपि सानुप्रासाः सूक्तयो यद्यपि गद्यमये एव रूपे ग्रथितास्तथापि प्रायशो नियतविरामबद्धतया पद्यसन्निकाशा एव, अतएव लयतालसमन्विता नर्तकीपदन्यासा इव रसनाया रङ्गमञ्चे सुखं नृत्यन्त्यः श्रोतॄणामन्तःकरणानि भृशं प्रसादयन्ति।

पुनश्च पदानां सन्निवेशा अपि यदि कामपि विशेषतामावहन्ति तदा निष्कण्टकाः प्रदेशा इव बालानामपि सुखप्रवेशा भवन्ति। इदमेव विचार्य पुस्तकेऽस्मिन् तादृशानि एव पदानि तथा प्रयुक्तानि यथा सूक्तिषु मुक्ताफलानीव पृथक्-पृथक् भासन्ते, अत एव यथा उच्चारणे तथैव धारणेऽपि सुमहत् सौविध्यमावहन्ति।

अपरञ्च पुनरस्यायोजनस्य एकं विशिष्टं प्रयोजनं वर्तते तच्च मनोरञ्जनेन सह तथा संस्कृतशिक्षणं यथा प्रथमप्रविष्टानां पाठकानामुत्साहभञ्जनं न जायेत। भूयांसः सुशिक्षिता विद्वांसोऽपि माघमासस्य भयङ्करात् शीतादिव संस्कृतात् भयभीता विलोक्यन्ते। ते खलु गिरेः आनयनमिव, कण्टके शयनमिव तथा बुद्बुदानां चयनमिव संस्कृतस्य अध्ययनं असम्भवं मन्यन्ते। परन्तु न तत्र कश्चन भाषागतो दोषस्तेषां त्रासस्य कारणं भवति प्रत्युत सरलललितानां सरसोक्ति-संवलितानां पुस्तकानामभाव एव। यदि एतादृशानि पुस्तकानि तेषां हस्तेषु उपन्यस्तानि स्युस्तर्हि ते असंशयं निर्भया भूत्वा संस्कृताध्ययने प्रवृत्ता भवेयुः।

अनेनैवाशयेन सन्धिसमासादयो नियमा भृशं वर्जिता एतस्यां रचनायाम्। यतो हि हृद्यानामपि संस्कृत-गद्यपद्यानां सन्धिविशेषा इक्षूणामिव क्लेशाय कल्पन्ते प्रविविक्षूणां

जनानाम् । एवमेव कदाचिद् दीर्घकायाः समासा अपि पुरातनाः कासा इव दीर्घा उपवासा इव च अध्ययने महान्तमायासं समुत्पादयन्ति निघ्नन्ति च प्रयासम्। एवञ्च एषा समधिक-सन्धि-समास-हीनताऽपि अस्याः नवीनतायाः समीचीनतायाश्च एकं विशिष्टं कारणं भवितुमर्हति ।

पुनश्च एतासु सूक्तिषु बहूनां समानानां सुप्तिङन्तपदानां सामूहिकरूपेण तथा विपुलः प्रयोगो विहितो येन विद्यार्थिनां भाषापरिचये महीयान् उपयोगो जायेत । अत एव द्वितीय-मालिकातः समारभ्य सर्वा अपि सूक्तयो विभक्तीरेव समनुसृत्य निर्मिता यथा भाषाशिक्षणाय सविशेषं हितावहा जायेरन् ।

सूक्तिषु पदान्यपि तथैव आयोजितानि यथा पाठका अन्वयस्य भयेन पराङ्मुखा न भवेयुः सुखादेव च अर्थमवगन्तुं शक्नुयुः । अन्वयाः खलु गद्य-पद्यानामर्थावबोधे भृशं प्रति-रोधका भवन्ति । यदि पाद्यानामन्वयकरणभारः पाठकानां शिरसो व्यपसारितः स्यात् तर्हि अल्पीयसा कालेन ग्रन्थस्य समाप्तिर्जायेत फलप्राप्तिश्च महीयसी । अतः सम्प्रति भाषायाः प्रचारस्य दृष्ट्या तादृशीनामेव कृतीनां निर्माणस्य आवश्यकता वर्तते या वाचनमात्रेणैव अर्थावबोधने समर्था भवेयुः व्यर्थायासेन च पाठकान् न क्लेशयेयुः । तादृशरचनाया उदाहरणरूपेणापि इदं पुस्तकं प्रस्तुतमस्माभिः । मन्ये, नवीना लेखका एतस्य अनुकरणं विधाय एतादृशीरेव सरल-ललिताः काश्चित् रमणीयाः कृतीः सुरसरस्वत्याश्चरणयोरर्पयन्ति चेत् संस्कृतप्रचारस्येतिहासे चिरं स्मरणीया भविष्यन्ति । तादृशीनां पुस्तक-पुस्तिकानां प्रकाशनेऽपि वयं यथाशक्ति साहाय्यं सम्पादयिष्याम इति सुदृढमाश्वासनं दद्मः ।

अथेदानीं नियम्यते लेखनी, विरम्यते च एतस्मात् लम्बायमानात् परिचयप्रदानात् । यद्यपि एतावत्कथनेऽपि उत्कोचग्रहण इव मे महान् सङ्कोच आसीत् तथापि क्वचित् अकार्य्य-मपि अनिवार्य्यं भवतीति सूक्तिमनुसृत्य आवश्यकं मत्वा स्वमुखेनैव स्वकीयविज्ञापने प्रवृत्तोऽभवम् । अन्यथा को नाम अपरः परस्य रचनाया यथातथं समस्तमभिप्रायं जानीयात् ज्ञात्वाऽपितत्प्रकाशनाय प्रयासं विदधीत वा । अस्तु नाम, अलमितोऽधिकेन प्रपञ्चेन ।

मन्ये, एषा लघीयसी अपि सूक्तिमालिका यथानामगुणं रत्नमयी दीपमालिका इव, गन्धर्वनगरबालिका इव, सुप्रबन्धवती नगरपालिका इव, कनीयसी श्यालिका इव, प्रियतमयो अङ्कपालिका इव च सर्वेषां कृते आह्लादिका जायेत तथा जने जने व्यसनानि इव, तनौ तनौ वसनानि इव मुखे मुखे रसनायां विराजमाना संस्कृतभाषायाः प्रचारे साधिका भूयादिति ।

## प्रथम-मालिका

[ एकैकपङ्क्तिबद्धाः सूक्तयः ]

प्रज्ञापराधा एव निखिलबाधानां मूलम् ।
मिथ्याभिमानः सम्मानं न वर्द्धयति ।
ज्ञानं खलु आचरितमेव हितं सम्पादयति ।
सर्वं सपरिमाणमेव कल्याणकरं भवति ।
अभावे शाकोऽपि मधुपाकायते ।
दुष्टा सन्ततिः महती दुर्गतिः ।
जन्मान्धा वरं, परं धर्मान्धा न वरम् ।
व्यर्थं-घोषणं कण्ठ-शोषणम् ।
पीडितानाम् अश्रुधारा वज्रसारा ।
आर्तानां वार्ता न रोचन्ते ।
परस्य उपहासः स्वस्य विकासं न साधयति ।
अनवद्या स्थितिरेव विद्यायाः फलम् ।
कन्या अहम्मन्यानामपि मानं मर्दयन्ति ।
निःश्वासमिव विश्वासं विना जीवनमसम्भवम् ।
धूर्तस्य विश्वासः जीवनस्य विनाशः ।
सर्वत्र एकता परमा विवेकिता ।
उद्योगे वृद्धिः योजनानां सिद्धिः ।
रत्नानि यत्नेन लभ्यन्ते ।
कुचेष्टाः कष्टावहा भवन्ति ।
दास्यं खलु कस्य आस्यं न नमयति ।
केवलं "नारा" उद्धाराय न अलम्भवति ।
अनङ्गः कस्य न शीलभङ्गं करोति ?
क्व जलबिन्दुः क्व सुधासिन्धुः ?
आवेशस्य लेशोऽपि अतिशयं क्लेशयति ।
मधुरभाषिणः अमृतवर्षिणः ।
प्रभूतानि अन्न-वस्त्राण्येव राष्ट्ररक्षाया मुख्यानि अस्त्र-शस्त्राणि ।

आनृण्यम् महत् प्रावीण्यम् ।
वैतृष्ण्यं परमं वैदुष्यम् ।
अनासक्तिः परा भक्तिः ।
आवेशः सम्पन्नमपि विपन्नं करोति ।
मिष्टमपि अतिरिक्तं चेदिष्टं न भवति ।
कुशलाः क्लिष्टमपि सुश्लिष्टं कुर्वन्ति ।
अभिमानस्य अंशोऽपि नरं भ्रंशयति ।
लेखनी खलु विधातुर्भगिनी इव सर्वशक्तिमती भवति ।
सौजन्यस्य अल्पमात्राऽपि लोकयात्रां सफलीकरोति ।
सहवास एव विश्वासं द्रढयति ।
अधिकं मूल्यं पातक-तुल्यम् ।
सर्वमपि रमणीयं प्रियं भवति ।
असीमा आशापि उपहासास्पदं भवति ।
दुराशयानां सम्बन्धोऽपि दुर्गन्धमावहति ।
मन्त्रणाभेदः सम्बन्धविच्छेदस्य कारणं भवति ।
सम्प्रदायाः खलु प्रबला अन्तराया विश्वबन्धुतायाः ।
अधिकारिणां पक्षपातः सुमहान् वज्रघातः ।
कृतिरेव व्यक्तित्वं विशेषयति ।
आग्रह एव मनुष्यस्य महान् दुष्टग्रहः ।
उपदेशः खलु मूर्खहृदये दुष्प्रवेशो भवति ।
केवल-भोगविलासः जीवन-यौवन-नाशः ।
निष्क्रियः सर्वेषामप्रियो भवति ।
क्षणिकोऽपि मनोहरालापः तापमपाकरोति ।
महतां कृपादृष्टिरेव सुधावृष्टिः ।
महान्तोऽपि आशाया दासा भवन्ति ।
अपमानिता शान्तिरेव क्रान्तिरूपं धारयति ।
सत्त्वमेव महत्त्वं सूचयति ।
सर्वं समरसं समञ्जसं भवति ।

सर्वेऽपि परवशा विवशा भवन्ति ।
अमाया प्रीतिः स्निग्धच्छाया इव सुखदायिनी भवति ।
यादृशी दृष्टिः तादृशी सृष्टिः ।
सहिष्णुरेव भविष्णुर्भवति ।
यदि तृष्णायाः शान्तिर्नास्ति तर्हि हृदयस्य विश्रान्तिः कुतः ?
आत्मनि अविश्वास एव आत्मनो विनाशस्य मूलम् ।
अनवधानं मन एव आपदां निधानम् ।
दर्पः सर्पदंश इव नरं नष्टं करोति ।
गर्वः सर्वं नाशयति ।
हृदयस्य परिचयः कर्मणा लभ्यते न तु वचसा ।
कृपणानां पणानि प्राणेभ्योऽपि प्रियाणि भवन्ति ।
यात्रायां तथा वरयात्रायां क्षुधाया एव मात्रा अधिका भवति ।
समाहारे द्वन्द्वोऽपि भवति आनन्दोऽपि भवति ।
रमणीयं सर्वस्यापि कमनीयं भवति ।
सर्वत्र विश्वासोऽपि नाशस्य कारणं भवति ।
यथा अवस्था तथा व्यवस्था ।
इन्द्रियनिग्रहे सर्वशक्तीनां संग्रहो भवति ।
यादृशो देशस्तादृशो वेषः ।
यादृशं सूत्रं तादृशं वस्त्रम् ।
मनोमलानि ज्ञानजलेन शुद्ध्यन्ति ।
देहमलानि स्नानजलेन शुद्ध्यन्ति ।
यदि पापं नास्ति तर्हि परितापस्य किं कारणम् ?
पापं संकल्पितमपि अनर्थाय कल्पते ।
आशास्तथा विश्वासा निःश्वासा इव प्राणिनां जीवनं धारयन्ति ।
प्रियंवदाः सर्वेषां सुखप्रदा भवन्ति ।
प्रमादः स्वल्पोऽपि कदाचित् महतो विषादस्य कारणं भवति ।
वादा निरपवादा न भवन्ति ।
वाग्व्यूहा अतीव दुरूहा भवन्ति ।

यथा देवाः तथा सेवाः ।
महताम् आशीर्वादः ईश्वरस्य प्रसादः ।
विद्यावतां सर्वोऽपि समयः आनन्दमय एव ।
सज्जनानां सर्वेऽपि सुहृज्जना एव ।
सद्विचार एव जीवनयात्रायाः कुशलः कर्णधारः ।
अहम्मन्यानां सौजन्यं कुतः ?
आपत्सु मग्ना अपि चेतसि अभग्नाः कार्यं साधयन्ति ।
रोषः खलु एकोऽपि दोषसहस्रस्य निधानं भवति ।
एकापि कुलकामिनी सौदामिनीव सर्वं कुलं चमत्करोति ।
प्रियाणां स्निग्धानि लोचनानि मुग्धानां सकलविपन्मोचनानि ।
एकस्तु प्रमादः तत्रापि विवादः !
सर्वं कालकृतं हितं भवति ।
प्रीतिसम्बन्धाः खलु प्रायेण अन्धा अप्रतिबन्धाश्च भवन्ति ।
कृत्रिमता मित्रतां विनाशयति ।
मनुष्यः चारित्र्येण पूज्यते न तु पावित्र्येण ।
दुर्जनानां कथाः खलु व्यथा एव जनयन्ति ।
यावत् श्वासाः तावत् आशाः ।
हस्ते माला हृदये बाला !
मिष्टं सर्वस्य इष्टं भवति ।
ज्ञानस्य अभिमानस्य च एकत्र अवस्थानं कुतः ?
एकस्तु खलः तत्रापि सबलः, तत्रापि कुशलः इति महान् अनर्थः ।
स्नेहमयी एकापि दृष्टिः सुधावृष्टिं करोति ।
भोजनं खलु प्रथमं प्रयोजनं सर्वस्य ।
यादृशी मतिः तादृशी गतिः ।
अहङ्कारस्य लेशोऽपि क्लेशशताय कल्पते ।
केवलं व्याख्यानं समस्यानां समाधानं न भवति ।
कर्महीनता एव दीनतायाः जननी ।
सुकुमारा शब्दावली अपि हारावली इव हृदयहारिणी भवति ।

एकस्तु कृतज्ञताया लोपः, उपरि च दोषस्य आरोपः कस्य प्रकोपं न जनयति ?

मनसः तुष्टिः परमा पुष्टिः ।

शब्दार्थयोरिव जीवनार्थयोरभेद्यः सम्बन्धः ।

चरित्रमेव मनुष्यस्य महत्तमं मित्रम् ।

स्निग्धा दृष्टिः अमृतवृष्टिः ।

केवलं वनवासेन संन्यासो न सिद्धयति ।

कर्तव्यनिष्ठा महती प्रतिष्ठा ।

यदि विपरीतो विधिस्तर्हि हस्तगतोऽपि निधिः लुप्यति ।

साहसवतां सम्पूर्णा सृष्टिरपि मुष्टिमिता एव ।

समताया बिन्दुरपि सुधासिन्धुमधरीकरोति ।

यावती सन्ततिः तावती दुर्गतिः !

लज्जावती लतिकाऽपि परस्य करस्पर्शं न सहते किं पुनः कुलशीलवती वनिता ?

रणमेव भीषणं शोभते न तु भाषणम् ।

उत्साहः खलु शक्तीनामक्षयः परीवाहः ।

आशावतां सर्वा अपि दिशो दासायन्ते ।

यावती सम्पत्तिः तावती विपत्तिः ।

आरोग्यमेव परमं सौभाग्यम् ।

कपटः कपाटः इव विश्वासं पिदधाति ।

विश्वासा दृढाः पाशा इव नरं झटिति न प्रतिमुञ्चन्ति ।

आस्था खलु जीवनं व्यवस्थापयति ।

प्रयत्नवतां सर्वाऽपि रत्नमयी भूमिः ।

स्वार्थः परार्थो वा पुरुषार्थेनैव सिद्धयति ।

व्यवसायः खलु आयस्य निरवग्रह उपायः ।

क्षुधाया ज्वाला वह्नितोऽपि विकराला भवति ।

निष्ठा एव कार्यं प्रतिष्ठापयति ।

क्रमशः

# कस्य मतं वामनं कस्य वाऽवामनम्

□

श्रीकृष्णदत्तशास्त्री शास्त्रपञ्चाननः

□

'रीतिरात्मा काव्यस्येति न वामनमतम्, अपितु सौन्दर्यमात्मा काव्यस्येति वामनमतम् ।' इति डॉ॰ रेवाप्रसादो द्विवेदी । 'काव्यस्यात्मा सौन्दर्यमिति न वामनमतम्, अपितु रीतिरात्मा काव्यस्येति वामनमतम् ।' इति श्री मा॰ चि॰ दीक्षितः । मतद्वयीयं परमार्थसुधायाः प्रथमद्वितीयवर्षयोः पञ्चाङ्कचषकेषु आपीता न पुनरास्वादिता । ननु कुतो नास्वादितेति चेद् द्वैधीभावाकलितत्वेन निर्णयाभावात् । विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति पक्षिप्रतिपक्षिणोराशयविमर्शेण अर्थमवधृत्याऽऽस्वादनीयम् । परमत्र कस्मै कस्मिन् कः किं केन कथं निर्णयेत् । यथा नैरुज्यकामो भेषजं भक्षयेदित्यत्र भेषजभक्षणव्यापारो नैरुज्यप्राप्तिरूपं फलमपेक्षते तथात्र निर्णयनरूपव्यापारः फलानुगमकं "कस्मै" इत्याद्यङ्गसप्तकमपेक्षते । तत्र कस्मै प्रयोजनाय निर्णेयम्— प्रमाणवन्ति वचनानि कर्णसुखमुपजनयन्ति सन्ति सतां ग्राह्याण्यपि भवन्तीति दुदुरूढवादिनिराकरणेन लोकशास्त्रसंरक्षणाय । कस्मिन् निर्णयः —त्रैमासिकपत्रिकायां परमार्थसुधायाम् । यत्र द्विवेदिदीक्षितमतयोः परस्परमुल्लेखप्रतिलेखौ स्तः । ते एते सूचीकटाहन्यायेन पूर्वमुक्ते ।

को निर्णेता यो विवेकी । 'विचिर् पृथग्भावे' इति विच् धातोर्भावे घञि विवेकशब्द निष्पन्नः । तदर्थः परस्परव्यावृत्त्या वस्तुतत्त्वनिर्णयः । व्यावृत्तिश्च इदमस्मात् पृथक् । इदमुक्त वस्तु अस्मादुक्तात् पृथगिति विवेचनशीलो विवेकी । स एव निर्णेता न तु अविवेकी यस्मात् स एवं विवेचनं कर्त्तुमशक्तः । विरूपः खलु जनो निजमुखदोषं विमलेऽपि दर्पणे समर्पयति । मूढचेताः खल्वयं मोघकर्मा भवति । प्रकृते निर्णेता परमार्थसुधाया विद्वान् पाठकवर्गः । यः किल लेखान् मनीषया विविच्य विविच्य पठति । किं निर्णेयम् । द्वयोर्मतयोर्याथार्थ्यम् । वास्तविकं तत्त्वम् । इदं मतं वामनम् । वामनो मान्यत्वेनास्यास्तीति ( अर्श आद्यजन्तत्वात्तथा ) वामनीयमित्यर्थः । वामनाचार्यग्रथित — काव्यालङ्कारसूत्राक्षरानुकूलम्; किन्तु मन्मनोऽस्तीति मन्मुखमस्तीति च वच्मि दशहस्ता हरीतकीतिवद् यन्न भवेत् ।

न चेदमपि भवेद् यत् अयि भोः ! कागजः, करो, लेखनी, मषी, करलेखिन्योश्चालनञ्च सर्वाणि स्वानि कस्त्वं प्रतिरोद्धा योद्धा लिखामि सौन्दर्यं काव्यस्यात्मेति । भवतु निर्युक्तिकम- शास्त्रीयञ्चेति [ वमनमेव वान्तमेव वामनं, स्वार्थेऽण् । तेन वामनं दूषितमथ चा तुच्छम् ] । अथवा अवामनम् अनिदन्तात्पर्यकत्वाद् वामनीयमतानानुकूलम् । अथवा अवामनम् अतुच्छं पूज्यं सङ्ग्राह्यम् । इदन्तात्पर्यकत्वाद् वामनाचार्यसम्मताक्षरानुकूलम् । तत्प्रतिपाद्यसङ्गमकत्वादिति द्विवेदिदीक्षतयोः कस्य मतं प्रामाणिकत्वाद् यथार्थम्; मननक- र्त्रोरनयोः कस्य मतं विश्वसनीयवाक्यत्वाद् वास्तविकमिति निर्णेयम् ।

केन निर्णयः, शास्त्रेण । तत्र शास्त्रं नाम गुरोर्मुखाच्छ्रूयमाणमेव श्रुतिरूपमित्यर्थः । ततश्च। सम्प्रदायानुसारमनुच्छृङ्खलं पटन् स्वगुरोर्मुखाच्छ्रुतं तेन । आगमः प्रत्येतव्यः । अनुल्लङ्घनीयः किल शास्त्रजलधिः । प्रकृते च ययोर्मते विवेचनीये तौ शास्त्रमनुसरतो न वा । तयोः को वा सम्प्रदायवित्, को वा असम्प्रदायवित् । तत्र सम्प्रदायविदेव अर्हत्तमः । असम्प्रदायवित् सर्व- शास्त्रविदपि मूर्खवदुपेक्षणीय इति शाङ्करभाष्यम् ।

तत्रात्र शास्त्रं काव्यालङ्कारसूत्रं वामनस्य । तदुपोद्बलकं मम्मटादिप्रणीतञ्च। वामनाचार्यः किमाह— अधिकारिणो निरूप्य रीतिनिश्चयार्थमाह—'रीतिरात्मा काव्यस्य काव्यं ग्राह्यमलङ्कारात् । अलङ्कारः सौन्दर्यम् ।' इति च । एवं शास्त्रेण निर्णयो रीतिरात्म काव्यस्य न तु सौन्दर्यम् । इति । सौन्दर्यन्तु अलङ्कारः अलङ्करणम् । 'त्वमेवं सौन्दर्या स च रुचिरतायाः परिचितः' इत्यत्र नवरसरुचिरेत्यत्रापि च सौन्दर्यं रुचिरता मनोहरता । प्रकृते द्विवेदी शास्त्रं नानुसरति प्रत्युत विरुणद्धि, दीक्षितस्तवनुसरति अनुरुणद्धि च । अतो द्विवेदी उपेक्षणीयः । स्मृत्या निर्णयः । स्मृतिः स्मरणं सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इत्युक्तेः कार्यकारणयोरभेदात्संस्कारः तेन च शास्त्रचिन्तनजन्यस्मरणबीजसंस्कारवान् आचार्यः । आचार्याद्धि विदिता विद्या साधिष्ठतां प्राप्नोति । उपनिषदङ्गभूतानि आचार्य- भाषितानि । आचार्यवान् पुरुषो वेद । तत्रात्र आचार्यः कः । कश्च तत्कृतनिर्णयः । इत्याह- काव्यशास्त्राध्ययनादिभिर्व्याख्यानख्यापनादिभिष्टीकाकरणादिभिः काव्यजगति प्रसिद्धः कामधेनुसमाख्याया वामनसूत्राणां व्याख्यायाः कर्त्ता पण्डितः श्रीगोपेन्द्रत्रिपुरहरभूपाल आचार्यः । एतत्कृतश्चायं निर्णयः ।

अधिकारिण इति । कर्तृनिरूपणानन्तरं कर्मनिरूपणमुचितमिति व्याचष्टे- रीतिर्नामेति । रीणन्ति गच्छन्ति गुणा अस्यामिति । रीयते क्षरत्यस्यां वाङ्मधुधारेति वा रीतिः । अधिकरणार्थे क्तिन् प्रत्ययः । करङ्कगात्रकल्पकर्कशतर्कवाच्यवैलक्षण्यप्रकटनप्रगल्भः कश्चन स्फुरत्ताहेतुस्वभावो- ऽत्रात्मा इत्युच्यते । ननु काव्यस्यात्मेत्येतत् कथमुपपद्यते, अशरीरभूतस्य आत्मावच्छेदकत्वा- सम्भवात् । ननु शरीरावच्छिन्न आत्मा भवति अतः शरीरमात्मनोऽवच्छेदकमित्युच्यते । काव्यन्तु

अशरीरम्, ततः शरीरं किम् यद्रीतिरूपस्य आत्मनोऽवच्छेदकं भवेत्। इत्याशङ्कायामाह—"शब्दार्थयुगलं शरीरम्। तस्याधिष्ठाता रीतिर्नाम आत्मा" इत्युपपत्तिमुन्मीलयितुमाकाङ्क्षित-पदमापूरयति शरीरस्येवेति वाक्यशेषः।

अन्येऽपि आचार्या मम्मट-गोविन्द-नागेशाद्याः। तत्र मम्मटः स्व-ग्रन्थे काव्य-प्रकाशे तत्कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मेति समूचे। गोविन्दो जगाद काव्यप्रदीपे स्वग्रन्थे—आद्ये पाञ्चालीया च गौडीया च रीतिः कथं काव्यस्यात्मेति। नागेशः स्वोपज्ञोद्योते 'तदुक्तं वामनेन रीतिरात्मा काव्यस्येति' सम्बभाषे। अन्येऽपि बहव एवमेव ननन्दुः। यै रीतिः काव्यस्यात्मेति वामनमतत्वेनोद्धृतम्। प्रकृते द्विवेदिनि आचार्याननु-सरणात् आचार्यवान् पुरुषो वेद इति सूक्तिर्न सङ्गच्छते, परं दीक्षिते तदनुसरणात् सा सङ्गच्छते।

युक्त्या निर्णयः। यस्मात् अवधारितपदार्थानामपि अवगतसंवादनार्थं परिप्रश्नाः प्रवर्त्तन्ते। युक्तिश्च प्रकृतार्थोपोद्बलकं लोकशास्त्रव्यवहारप्रसिद्ध्याश्रितमिदमुचितमि-दमनुचितमित्यनुसन्धानम्। तत्र लोकप्रसिद्धिः - इदं रीतिकालिकं काव्यम्। इदं रीत्या-त्मकं काव्यमिति लोकप्रसिद्धेः सत्त्वादन्वयसाहित्यम्। नेदं रीतिकालिकं काव्यम्। नेदं रीत्यात्मकं काव्यमिति लोकप्रसिद्धेर्व्यतिरेकसाहित्यम्। इदं सौन्दर्यकालिकं काव्यम्। इदं सौन्दर्यात्मकं काव्यमिति लोकप्रसिद्धे राहित्यादन्वयराहित्यम्। नेदं सौन्दर्यकालिकं काव्यम्। नेदं सौन्दर्यात्मकं काव्यमिति लोकप्रसिद्धेरभावाद् व्यतिरेकराहित्यम्। इत्येवं लोकप्रसिद्धाभ्यामन्वयव्यतिरेकयोः साहित्यराहित्याभ्यां रीतिः काव्यस्यात्मेत्येव सिद्धम्।

शास्त्रप्रसिद्धिः। किं नाम काव्यमित्यपेक्षायामुच्यते। काव्यं हि पङ्कजादिवद् योग-रूढत्वाद् गुणोल्लसितशब्दार्थसंघटनात्मकमेव कवेः कर्म न तु कर्ममात्रम्। तत्र संघटना योजना रचना चेति पर्यायाः। एवं हि लोकोत्तरवर्णनानिपुणस्य कवेर्निपुणमसाधारणं शब्दार्थयोर्गुणोल्लसितरचनाख्यं कर्म काव्यम्। अर्थात् कविकृतिविषयतासम्बन्धेन रचना-श्रयौ शब्दार्थौ काव्यम्। एवञ्च यदि रचना न स्यात्तर्हि काव्यत्वमेव दुर्घटम्। तेन रचना-मन्तरा कथं काव्यमित्यायातं रचना काव्यस्य जीवितम्। रचना च रीतिरेवेति सुष्ठूक्तं रीतिरात्मा काव्यस्येति। न हि साहित्यशास्त्रे कुत्रापि दृष्टश्रुतचरं यच्छब्दार्थयोः सौन्दर्यात्मकं कवेः कर्म काव्यमुच्यते इति। आम्, रचनायां सत्यां यमकोपमादिभिरलङ्कारैर-लङ्कारः सौन्दर्यमाधीयते। रीतिः सुन्दरी न वेति गवेष्यते। मन्ये इमं सिद्धान्तं द्विवेदी नहि जानाति। जानीयाच्चेत्तर्हि कथमपीदं न वदेत् यत् सौन्दर्यमात्मा काव्यस्येति।

व्यवहारप्रसिद्धिः। भो मित्र! कामपि नवीनां रचनां श्रावयेति। एषु दिवसेषु

क्वापि नवीना रमणीया रचना कृता किमित्येव व्यवहारो मित्रयोर्वार्त्तालापेषु भवतीति। न तु किमपि नवीनं सौन्दर्यं श्रावयेति। न तु एषु दिवसेषु किमपि नवीनं रमणीयं सौन्दर्यं कृतं किमिति व्यवहारः। कोऽपि कुत्रापि स्वप्नेऽपि किमुत जागरणे इदं नहि व्यवहरति यत्कविकृतिविषयतासम्बन्धेन सौन्दर्याश्रयौ शब्दार्थौ काव्यमिति। तस्माद् रचनया प्रतिष्ठिते सरीतिके काव्ये सौन्दर्यमस्तीति अकामेनापि व्यवह्रियते। रीतिमन्तरा काव्यमेव न स्यादित्यर्थः। रीतिश्च गुणविशिष्टा रचनेति। अत एवोच्यते अभियुक्तप्रवरेण केनाऽपि—

"गुणयुग्रीतिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम्।
मृताया मृगशावाक्ष्याः किं स्यात् सौन्दर्यसाधनैः॥' इति।

स्वानुभूत्या च निर्णयः। स्वानुभूत्येकमानायेत्युक्तेः। निसर्गसौम्यं हि ज्योतिः स्वानुभव एवावतिष्ठते। 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।' तथा हि—

'किन्त्वस्ति काचिदपरैव पदानुपूर्वी यस्यां न किञ्चिदपि किञ्चिदिवावभाति।
आनन्दयत्यथ च कर्णपथं प्रयाता चेतः सताममृतवृष्टिरिव प्रविष्टा॥'

एवं सर्वस्यापि भावुकशिरोमणेः पदानुपूर्वीश्रवणोत्थ आनन्दानुभवः। अतस्तत्राह्लादे साधनतमा तादृशी रचनैव न तु सौन्दर्यम्। एवं हि नीरीतिके रचनाशून्ये काव्ये सौन्दर्यं न बुद्धं न श्रुतं न दृष्टं न स्मृतं नानुमतं नानुभूतञ्च केनापि। अत आयातं काव्यस्य जीवनाधायकतया सारभूतः पदार्थो रीतिरेव न तु सौन्दर्यमिति सुष्ठु अभिहितं रीतिरात्मा काव्यस्येति।

कस्मान्निर्णयः। विवादाद् द्विवेदिदीक्षितयोः परस्परं विविधं विशिष्टं विपथं विरुद्धं वादात्। वादश्च प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षग्रहः। सिद्धान्ताविरुद्धेन सम्प्रदायानुकूलेन प्रमाणेन पञ्चावयवोपपन्नेन तर्केण साधनदूषणात्मा सपक्षप्रतिपक्षग्रहस्तत्त्वनिर्णयपर्यन्तो वाद इत्यर्थः। वादस्य फलं तत्त्वनिर्णयः 'वादे वादे जायते तत्त्वबोधः' 'बोधे बोधे सच्चिदानन्दभासः' इत्युक्तेः। अतो विमृशेलिमम्। कः प्रज्ञैरवादानवदनीयान् शब्दान् भाषते, कः प्रज्ञया वादान् वदितुमर्हान् शब्दान् भाषते। को वा वामनाक्षराणि तत्प्रसिद्धिञ्चानुसरति अनुरुणद्धि च को वा तद् धुनाति प्रतिक्षरति प्रतिरुणद्धि च। ननु किमेतदुच्यते उभावपि साक्षरौ द्वावपि विद्वांसौ ( विद्लृ लाभे धातोर्निष्पन्नत्वात् ) लाभपरौ। आम् स्तस्तथा तौ, परं न जानाति भवान् किं साक्षरविषये प्रसिद्धिम्—साक्षरौ विपरीतौ चेद्राक्षसावेव केवलम्। तथाहि—पाण्डित्यं निर्विद्यापि इमौ

विभिन्नौ। ननु कुतो ज्ञायते तयेमौ। दुराग्रहग्रहिलत्वाद् बुद्धेरभावप्रसक्तत्वाच्च। बुद्धेः फलमनाग्रहः।

स्पष्टानि वामनाक्षराणि तट्टीकाकृतः, तदुद्धर्तृ मम्मटादीनामाशयाश्च। आशिक्षित-बालवृद्धवनितं प्रसिद्धेश्च। तथापि एकः कथयति—सौन्दर्यमात्मा काव्यस्येति वामनमतम्। रीतिरात्मा काव्यस्येति न वामनमतम्। यानि वामनग्रन्थे सर्वेषां मान्यानां ग्रन्थेषूद्धृतानि तान्यक्षराणि न वामनानि। येषां वामनेन तन्मतोद्धर्तृभिरन्यैराचार्यैश्च स्वप्नमपि न गृहीतं तानि वामनीयानि। अहो किमाश्चर्यमतः परम्।

सौन्दर्यं काव्यस्यात्मा इति वक्तुरक्षराणि इमानि—"वैदर्भीप्रभृतीनाञ्च प्राणा एते गुणास्ततः।" इति महदशुद्धानि द्विवेदिनोऽक्षराणि। अत्र पाठका दृष्टिं निक्षिपन्तु। एतां द्विवेदिनोक्तां पङ्क्तिं दीक्षितो वराकः स्वलेखे "कः खलु काव्यात्मा वामनमते" इत्याख्ये प्रथमवर्षीयचतुर्थाङ्के उद्धृत्य लिखति स्पष्टं लिखति इति वामनानुक्तं दण्डिवचनमवलम्ब्य इति। सर्वोऽपि साधारणज्ञानवानसाधारणज्ञानवानस्यार्थं प्रतिपादयति यद् वामनेन वामनाचार्येण अनुक्तमभाषितं दण्डिनो वचनमवलम्ब्येति। तथाप्ययं द्विवेदी दोषमारोपयति दीक्षिते यद् "वैदर्भमार्गस्य प्राणा दश गुणाः" [ काव्यादर्शे १।४२ ] इति दण्डिनो वचनस्य यो वामनवचनतयाभ्युपगमभ्रमो मयि पातितः। कुत्र दीक्षितेन लिखितं वामनोक्तमेतद्वचनं, स तु स्पष्टं लिखति वामनानुक्तमिति। स्वयं भ्रान्तो द्विवेदी तत्र भ्रामकत्वं वृथाऽऽरोपयति अकथितं दोषम्। ननु महदशुद्धानि द्विवेदिनोऽक्षराणीति कथञ्चेच् शृण्वन्तु पाठकवरेण्याः। असमस्तगुणा पाञ्चाली गौडी च रीतिः, वैदर्भीरीतिः समस्तगुणा इति शास्त्रीयः पन्थाः। परमयं कथयति वैदर्भीप्रभृतीनामिति। प्रभृतिशब्द आद्यर्थकः। तेन वैदर्भी-पाञ्चालीगौडीरीती-नामेते दश गुणाः प्राणा इत्यायाति। एतच्च शास्त्रविरुद्धत्वान्महदशुद्धम्। इयमस्योक्तिः।

आचार्यदण्डिनस्तु वैदर्भमार्गस्य दश गुणाः प्राणा न तु अन्ययोः पाञ्चालीगौडयो रीत्योस्तथा इत्युक्तिः। वैदर्भी समस्तगुणेति गुणा बहुवचनमुचितं वैदर्भीप्रभृतीनां न तथेति महदनुचितं तत्। वैदर्भीप्रभृतीनाञ्चेति चकारो व्यर्थः, चकारार्थस्य कस्याप्यभावात्। पूर्वपद्ये ये गुणा इत्युक्तं, तदाकाङ्क्षाद्वारकतयात्र पद्ये ते इति वक्तव्यं ततश्चस्थाने ते पाठः समुचितः। अत्रैव पद्ये तत इति पदं किमर्थम्। यतो गुणाः प्राणास्ततो गुणा आत्मान इत्यर्थबोधनाय किम्! तदपि महदशुद्धम्। अयं जीवति। कथं ज्ञायते यतोऽयं प्राणिति स्वसिति, प्राणान् धारयति। एवं प्रज्ञाप्राणौ ततो मुख्योपाधी स्वात्मावबोधने इति वेदान्तः। प्राणाः प्राणिनि आत्मनो ज्ञापका लिङ्गानीत्यर्थः। ते प्राणा लिङ्गिन आत्मानः कथं स्युः? धूमो यो वह्नेर्ज्ञा-पकं लिङ्गं स एव धूमो लिङ्गी वह्निरिति को ब्रूयात्। ततो गुणः रीतीनामात्मेत्येव अपसिद्धान्तः

कुत आगतः। यदा तत्रैव सिद्धान्त आगतः यद् गुणो रीतीनामात्मा तदा गुणः काव्यस्यात्मेति सिद्धान्ते काव्यात्मत्वं गुणे सिद्धमिति रूपं कथमात्थ—'काव्यात्मत्वं गुणे सिद्धं न रीतौ वामनाध्वनि'। ततश्च या रीतिरात्मा काव्यस्येति श्रुतिस्ततः। इत्येतत् किम्। यदि रेवन्त्या नर्मदेश्वरं महादेवमनुकूलयितुमाक्रष्टुमुत्प्लुत्योत्प्लुत्य गच्छन्त्याः सरितः प्रसादस्य प्रसन्नताया अध्वनि सिद्धं तर्हि वामनाध्वनि कुतः सिद्धं स्यात्। यतो रीतिरात्मा काव्यस्य ततो गुणः काव्यस्यात्मा इत्ययं प्रलापो वा विलापो वा। "अलङ्कारो हि सौन्दर्यमलङ्कारश्च निःसृतिः" अत्र अलङ्कारः क इति जिज्ञासायामाह 'अलङ्कारः सौन्दर्यमि'ति। पुनस्तर्हि अलङ्कारश्च निःसृतिरिति कोक्तिः। यदि सौन्दर्यमत्रालङ्कार इत्युक्तं भवेत्तदाऽलङ्कारपदार्थस्फोरणार्थमलङ्कारश्च निःसृतिरिति निर्ब्रूयात्। परं तथा नास्ति। एकवारमलङ्कारः सौन्दर्यमिति बोधितम्। पुनरलङ्कारो निःसृतिरिति किम्। अलङ्कारो निःसृतिरिति मघवा मूलं बिडौजा टीका इति प्राचां प्रवादे श्रुतं स्मारयति। अत्र हिपदं किमर्थम्, हि यतः अलङ्कारः सौन्दर्यं ततोऽलङ्कारो निःसृतिः। अर्थात् हे अलङ्कार! यतस्त्वं सौदर्यं ततो भोः! अलङ्कार! निःसृतिः संसाराद् बहिष्करणम्। चकारः किमर्थः। चेदलङ्कारः संसाराद् बहिष्करणं संसारान्तःपातिनः काव्यादपि बहिष्करणं स्वतः प्राप्तं तर्हि सौन्दर्यं काव्यस्यात्मेति भवतोऽपसिद्धान्तस्य वा का गतिः स्यात्। भवादृशः परिचयाद् वराकस्य सौन्दर्यस्य विश्रान्तिः निःसरणमन्तरा अन्या का गतिः स्यात्। 'गुणौपम्याद्युपादानदोषहानसमुच्चितेः' इत्यत्र समुच्चितेरिति पदं पञ्चम्यन्तं वा षष्ठ्यन्तं वा। तस्य पञ्चम्यन्तत्वे एषामुच्चितिहेतोर्निःसृत्यर्थकमलङ्कारपदं स्यात्। ततश्च यत्र काव्ये एषां समुच्चितिः समुच्चयः, तस्मात्कारणादेषां निःसृतिरलङ्कारः। तस्य षष्ठ्यन्तत्वे एषां समुच्चयस्य निःसृतिरलङ्कारः काव्यात् स्यात्। एतेन दुष्प्रलापेन कस्यापि कोऽर्थः सेत्स्यति भवन्तमन्तरा। गुणौपम्यादुपादानेत्यत्र औपम्यमुपमा तदादयोऽर्थालङ्कारा एव प्राप्ताः। शब्दालङ्काराणामुपादानं नापेक्षितं किम्। अपेक्षितं चेत्कुतो नोपादानं कृतम्। ननु छन्दःसङ्गतये चेत्तदाऽपि गुणालङ्कृत्युपादानेति पाठे सा सङ्गतिर्ग्रन्थकारवामनाशयस्य च। ते भवतो दृष्टिगोचरं न गते। एवं गुणोऽपि सम्प्राप्तः साधनत्वं ततश्च सः। अप्रधानत्वमप्राप्तश्च्युत आत्मत्वतश्च तत्। अत्र प्राक् कस्यापि साधनत्वप्राप्तिरुक्ता भवेत्तदा वक्तव्यं स्यात्, एवं गुणोऽपीति। यदा प्राक् तथा नोक्तं तदा कथमुच्यते एवमस्मात् कारणाद् गुणोऽपीति। नोक्तं किमपि तत्। ततश्चासङ्गतमेव सर्वमेतत्कथनम्। यदि अपि शब्दः समुच्चयार्थकः, तर्हि स इत्येकवचनं कुतः। एको गुणः द्वितीयोऽपिना समुच्चित इत्येवं द्वौ पदार्थौ। पूर्वं काव्यात्मत्वं गुणे सिद्धमित्यादिना गुणः काव्यात्मेति साधितं सम्प्रति "एवं गुणोऽपि च्युत आत्मत्वतः" इति गुणस्य वराकस्याऽऽत्मत्वं च्याव्यते। समनन्तरमेव सौन्दर्यस्य का गतिः कृता, इदानीं गुणस्य का गतिः क्रियते।

अतः परं प्रथमवर्षीयतृतीयाङ्कागतवामनसौन्दर्यदर्शनानुस्यूताद् भवद्दर्शनादुद्वीज्य सम्प्रति भवतो द्वितीयवर्षीयप्रथमाङ्के मुद्रितायाः "वामनाचार्यसिद्धान्तनिर्द्धारणे मम दृष्टिः" इत्यस्या दृष्टेर्दोषो निवार्यते। अयं द्विवेदी लिखति काव्यस्यात्मा सौन्दर्यम्। तच्च गुणालङ्कारहानोपादानसाध्यम्। अत्र गुणश्च अलङ्कारश्चेति गुणालङ्कारौ। हानञ्चोपादानञ्चेति हानोपादाने। यथासंख्यमन्वयः। एवं गुणस्य हानम्। अलङ्कारस्योपादानम्। गुणालङ्कारयोर्हानोपादानाभ्यां साध्यं तत्सौन्दर्यम्। अत्र गुणस्य हानमपहरणं महाशयेन कृतम्, परं कविसमाजे लोके च प्रसिद्धं यत् सुलभा रम्यता लोके दुर्लभं हि गुणार्जनमिति। गुणानामुपादानमेव कर्त्तव्यं न तु हानम्। अयं महाशयो गुणहानेन सौन्दर्यं साधयति। अग्रेऽपि एवञ्च गुणहानाच्च सौन्दर्यं प्रति गुणानां साधनत्वमेव। पुनरग्रे रीतिश्च तथाविधवैभवैव गुणविधवैभवैव, यतस्तस्या गुणविशिष्टपदरचनासतत्त्वात्। गुणानां वैभवं हानाख्यं तथाविधवैभवं हानाख्यं वैभवं रीतेरपि।

अन्यच्च "वामनः सौन्दर्यस्यैव आत्मभावे प्रामुख्यं साधयितुमिच्छति" इति। किमाश कं वाक्यमेतत। आत्मभावे "आत्मा अस्ति" इत्यत्र प्रामुख्यं वरेण्यत्वं सौन्दर्यस्यैव नान्यस्य। एवं हि सौन्दर्यं यत्र तत्रैवात्मा निःसौन्दर्येषु कीटाणुप्रभृतिषु आत्मा नास्ति। तेन आत्मनो विभुत्वं व्यापकत्वं यच् शास्त्रेषूपपादितं तत्सर्वं निरर्गलमेव स्यात्। अन्यच्च-साधयितुमिच्छति। इति किम्वुक्तम्। कुत्र कानि वामनस्याक्षराणि सन्ति यैस्स तथेच्छतीति ज्ञायेत। अन्यच्च देहादीनामात्मपदवाच्यत्वमिति कोक्तिः। शब्दार्थयुगलं काव्यशरीरमिति आशिक्षितं प्रसिद्धिः।

परमार्थसुधाया द्वितीयवर्षस्य तृतीयाङ्के द्विवेदिना 'रीतिरात्मा काव्यस्येति न वामनमतम्' इति नामके स्वलेखे रीतिः काव्यस्यात्मेति दार्ष्टान्तिकेन दृष्टान्तभूतस्य शरीरस्यापि तत्त्वमुपपद्यते इति विलिखितम्। दृष्टान्तेन दार्ष्टान्तिकस्योपपत्तिस्तु सर्वसम्मता। सर्वत्र प्रकृतार्थनिश्चायको दृष्टान्तः प्रकृतो भवति। तेन प्रकृतार्थस्य निश्चयो भवति तद्यथा—

"तृप्तियोगः परेणापि महिम्ना न महात्मनाम्।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः॥" इति।

किमुपपद्यते इत्यपि पाठकवर्याः पश्यन्तु। शरीरस्य यौवनादिगुणविशिष्टाङ्गरचनावत्त्वम्। आत्मनश्च यौवनादिगुणविशिष्टाङ्गसंरचनावत्त्वम्। इदानीं यावदिदमेव शास्त्रेषु सर्वत्र प्रसिद्धमासीदस्ति च यच्छरीरं भिन्नम्। आत्मा भिन्नः। परं द्विवेदिमते यौवनादिगुणविशिष्टाङ्गरचनावच्छरीरं तादृश एव यौवनादिगुणविशिष्टाङ्गसंरचनावान् आत्मा। एवमेकलक्षणकत्वान्नास्ति भेदः। असाधारणधर्मो हि लक्षणं भवति। यो धर्मः शरीरस्य

स एव धर्म आत्मनः। तर्हि एकेनैव निर्वाहे द्वयोर्लक्षणयोर्लेखनस्य काऽऽवश्यकता। अथ च शरीरमिदम् आत्मा चायमित्यस्य विनिगमकं किम्? तर्हि व्यर्थः प्रयासः। अन्यच्च कवेः कर्म काव्यं, तत्र कवेर्न यावत्कर्म काव्यमपि तु गुणोल्लसितशब्दार्थसंघटनात्मकमेव। पङ्कजादिवद् योगरूढत्वात्काव्यपदस्य। अतः गुणोल्लसितशब्दार्थयोः संघटना रचना [आत्मा यस्य तत् काव्यम्। अत्र शब्दार्थयुगलं काव्यशरीरम्। संघटना रीतिरात्मा। यस्य सत्तया यस्य सत्ता स आत्मा इत्यन्वयः। यस्य सत्तया विना यस्य सत्ता नास्ति स आत्मा इति व्यतिरेकः। आभ्यां प्रतीयते यद् रीतिसत्तया काव्यशरीरसत्ता, रीतिसत्तया विना काव्यशरीरसत्ता नास्ति, अतः रीतिरात्मा काव्यस्येत्यायातम्। गुण अनात्मभूतोऽपि अपृथग्भूतः। एतस्मादेव स व्यञ्जको विशेषणम्। शास्त्रेषु व्यञ्जक एव विशेषणमेवावच्छेदकशब्देनेष्यते। गुणेन गुणैर्वाऽवच्छिन्ना विशिष्टा रचना रीतिरात्मा भवति। यथा शरीरावच्छिन्नो जीवात्मेत्युच्यते। परं सौन्दर्यसत्तया काव्यस्य सत्तेति नास्ति यतस्तद्विनापि काव्यं काव्यमिति व्यवह्रियत एव। तस्मान्न सौन्दर्यमात्मा काव्यस्य। अहो यौवनादयो गुणविशेषाः, किन्तु आचार्यैरुच्यते यत्ते कालविशेषव्यापिका अवस्थाः। कालविशेषावच्छिन्ना दशाः। तैर्युक्ता या अङ्गानां संरचना (ललितोचितविन्यासः) तद्रूप आत्मा। अहो द्विवेदिमते सम्यग् रचनारूपत्वादात्मा जन्यः कृतकः।

'युवतेरिव रूपमङ्ग काव्यं (वाक्यं) स्वदते स्वादुगुणम्' अत्र वामनाचार्येण शुद्धगुणमिति पाठः प्रयुक्तः। तद्विपर्यस्य स्वादुगुणमिति असङ्गताप्रासङ्गिकस्वादुपदघटितः पाठो द्विवेदिना प्रयुक्तः। अत्र वामनाचार्याशयः— यथा युवतेः शुद्धगुणमलङ्कारामिश्रितत्वात् केवललावण्यादिगुणकं रूपं वपुः। अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्यवपुषि श्लोकशब्दयोरिति विश्वः। स्वदते रोचते तथा कवेः शुद्धगुणमलङ्कारामिश्रितत्वात् केवलमाधुर्यादिगुणकं काव्यं स्वदते, अलङ्काराभावेऽपि गुणसत्त्वे काव्यास्वादसत्त्वमित्यन्वयविधया;

यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते॥

यथा अङ्गनायाः (अङ्गात् कल्याणे इति नप्रत्ययः) कल्याणमयाङ्गवत्या अपि किमुत अतथाऽङ्गायाः। अतथाङ्गापि "प्राप्ते तु षोडशे वर्षे गर्दभी ह्यप्सरायते" इत्युक्तेः सुन्दराङ्गा भवति। वपुर्यौवनाद् हीनं यदि भवति तर्हि अलङ्करणानि हारादीनि दुर्भगत्वं संश्रयन्ते। तथैव कवेर्वचो गुणेभ्यश्च्युतं रहितं यदि भवति तर्हि अलङ्करणान्युपमादीनि अनादरणीयानि भवन्ति। गुणाभावेऽलङ्कारसत्त्वेऽपि काव्यस्य सुभगत्वाभाव इति व्यतिरेकविधया गुणानां पूजार्हत्वं काव्यव्यवहारप्रयोजकत्वरूपं नित्यत्वं साध्यते। एवमत्र काव्ये गुणा एव

नियतमुत्कर्षाऽऽधायका न तु तदतिरिक्ता अलङ्कारादयः, अर्थात् अलङ्काराः सन्तु वा मा वा सन्तु गुणसत्त्वे काव्यत्वं स्यादेवेति स्थिरीकरणायैवेदं पद्यद्वयमुक्तं वामनाचार्यैः। अनलङ्कृती पुनः क्वापीति मम्मटाचार्यैरपि समर्थितम्। अत्र अङ्गनापदं प्रशस्ताङ्गवतीपरं न तु प्रशस्ताङ्गतापरम्। यथा पामनपदं पामायुक्तपरं न पामतापरम्। तद्वत्। अङ्गनापदेन कः समाधिः। उपमया समर्थनमिति वक्तव्यम्। रेखा हि चित्रेऽवयवस्थानं बिभ्रति। शरीरमेव च तच्चित्रस्य, नात्मा।

चकारः किमर्थं शरीरमेव चेत्यत्रोपात्तः। वाक्यालङ्कारकोऽपि स नास्ति। चार्थोऽपि कश्चिन्नास्ति। शरीरमवयवी। तत्र करचरणादीनां यत्स्थानं रेखाणां चित्रे तदेव स्थानम्। एवं हि अवयवस्थानं शरीरं रेखास्थानं चित्रम्। इति शरीरचित्रयोरेका कोटिः, रेखावयवयोरेका कोटिः। एवमनेककोटिकयोः सद्भावे चित्रस्य शरीरमिति कोक्तिः। तथा नात्मेति लेखनस्य कः प्रसङ्गः? आत्मरेखयोरेका कोटिः। यथा आत्मानं विना शरीरस्य सत्ता नास्ति तथा रेखां विना चित्रस्य। आत्मा हि शरीरस्य स्फूर्तिदस्तथा रेखा हि चित्रस्य जीविकाः। अतो रेखा हि चित्रे आत्मस्थानं बिभ्रति। एवमात्मैव ताश्चित्रस्य, न तु शरीरम्। इति। अत्र पूर्वत्र चोक्ते यौवनादीति पदे आदिपदार्थः कः? यो गुणेन साम्यं बिभृयात्।

यौवनादिविशिष्टावयवसंघटनास्थानीया च रीतिरिति निष्पद्यते सन्दर्भार्थः। किमयं सन्दर्भार्थस्येदृशो निष्पादो भवत्कृतः। भवाँस्तु यद्धि चित्रे रेखाणां स्थानं तदेव काव्ये रीतीनाम्। रेखा हि चित्रे अवयवस्थानं बिभ्रतीत्येवं ब्रवीति। एवमुक्तौ हि रीतिः काव्ये अवयव एव न तु अवयवसंघटना तर्हि भवन्मते कथं स निष्पादः।

वरेण्यायामित्यस्य प्रधानस्त्रियामित्यर्थः। क्लीबे प्रधानं प्रमुखं, मुख्यवर्यवरेण्याश्चेत्यमरः। तेन नायकेन वरीतुं योग्यायां वरणीयायामित्यर्थो नास्ति। अङ्गसौष्ठवादिषु स्थविष्ठेषु विशेषेषु इति भवदुक्तिः। अत्र "सौन्दर्यमङ्गसौष्ठवम्" इति मालतीमाधवप्रकरणीयटीकाकारोक्तवचःप्रामाण्यादङ्गसौष्ठवमेव सौन्दर्यं नान्यत्। तच्च भवदुक्तरीत्या स्थविष्ठमतिस्थूलम्। तत्कथं काव्यस्यात्माऽर्हति भवितुम्, अतिस्थूलपदार्थस्य बाह्यत्वादनात्मत्वम्। नान्तरीणत्वमात्मत्वम्। आत्मा तु अन्तरीणः।

इदन्तु बोध्यम्। न हि सौन्दर्यमात्मा काव्यस्येति काव्यविदां प्राचां साहित्याचार्याणां पन्थाः। न चात्र काऽपि युक्तिः श्रुतिः स्मृतिः व्यवहृतिः अनुश्रुतिः अनुमतिर्द्दष्टिश्च; येन वामनाद्याचार्याणामक्षराण्युपेक्ष्य भवदुक्तमक्षरं श्रद्दधे। प्रत्युत वैपरीत्यमेवोचितम्। प्राचामेव काव्यसरणिनिर्धारकत्वात्। नह्यस्मिन् काव्यशास्त्रे साहित्यशास्त्रे वा काव्यात्मगुणालङ्काररीतिवृत्तिप्रभृतिशब्दसङ्केतग्राहकं प्रमाणमास्ते ऋते प्राचीनालङ्कारिकवचनेभ्यः। अत एवात्र शास्त्रे आक्षेपोऽपि, असङ्गतिरपि, कारणं विनापि कार्यसद्भावरूपा विभावनाऽपि अलङ्कारकोटीमाटीकन्ते। अन्यथा सकलमकलं विकलञ्च स्यात्। यदि तु प्राचीन-

सङ्केतसेतुं निर्भिद्य स्वरुचिरमणीया सरणिराद्रियेत तर्हि सर्वेऽपि प्रकारा ध्वन्यादयो गुणीभूतव्यङ्ग्यादयो गुणा अलङ्कारा रीतियो वृत्तयः प्रवृत्तयश्च विपर्यस्यन्ताम्।

वरस्य मते वध्वा अङ्गरचना आत्मेति भवदुक्तिः। अत्र वरत्वावच्छिन्ना यावन्तो वराः सन्ति तेऽत्राभीष्टाः। जात्यभिप्रायेणैकवचनम्, न तु एक एव कश्चित्। अतः समेषामेषां मते अङ्गरचनैव आत्मा न तु सौन्दर्यमात्मा केषामेषामन्येषाञ्च मतेऽपि। तेनायातमङ्गरचना आत्मेति। काव्ये अङ्गानि पदान्येव। अङ्गभूतानां तेषां पदानां रचना रीतिः। ततश्च अङ्गरचना आत्मेति भवदुक्त्या पदरचनारीतिः काव्यस्यात्मेति प्राप्तं भवति। एवं हि यत्सत् तस्यैव भवल्लेखनीतो निसृतिरलङ्कारः। अलङ्कारस्तु निःसृतिरिति भवदुक्तेः।

देहादीनामात्मपदवाच्यत्वं भवदुक्तिः। अत्र "आत्मा देहेन्द्रियप्राणमनोऽहङ्कारबुद्धिषु" इत्यादिवचनेषूपात्ता ये देहादिशब्दास्तेषां मध्ये कस्यापि शब्दस्य सौन्दर्यं नार्थः। अतः सौन्दर्यमात्मेति कस्यापि मते स्यादिति स्वप्नायितम्। देहः शरीरमात्मेत्युच्यते तत्र काव्यस्य शरीरं शब्दार्थयुगलमपि आत्मेति प्राप्तम्। कीदृशं शब्दार्थयुगलं काव्यस्य शरीरमिति विचारे घटपटवरटसरटाः शब्दा अपि शब्दाः। ये सार्थका एव नहि भेर्यादिशब्दवन्निरर्थकाः। परमिमे न काव्यशरीरतां गाहन्ते। 'अमरा निर्जरा देवास्त्रिदशा विबुधा सुरा' इति रचितस्य शब्दार्थयुगलस्य काव्यशरीरत्वेन ग्रहः स्वल्पमतेरपि नास्ति किमुत विदः। विशिष्टस्यैव रचनावत एव शब्दार्थयुगलस्य तत्त्वं स्यात्तेन विशिष्टशब्दार्थरचना काव्यस्यात्मेति स्वतः प्राप्तं भवदुक्त्या। आत्मशब्दस्य भूतार्थवादत्वं पुनः सौन्दर्यं एव वामनमते। इति भवदुक्तिः। कोऽर्थोऽस्य। तथाहि—भूतार्थवादः स्तुत्यर्थकथनं निन्दार्थकथनम्। तेनात्मशब्दः स्तुत्यर्थकथनं सौन्दर्ये इति प्राप्तम्। तद्धि वामनमते केनाक्षरेणैकेनापि बोधितं वा स्मारितं वा अनुभावितं वा ! भूतार्थवादः कश्चिच् शब्दो वर्त्तते। तस्य प्रसङ्गोऽस्ति न वा। अङ्गरचना हि सौन्दर्यस्य साधनम्, न तु सौन्दर्यमेव। अत एव 'सौन्दर्याभावादेव' वीतरागोऽङ्गरचनां जुगुप्सितां मनुते। यदि सा सौन्दर्यं स्यात् तर्हि तु वीतरागो विशेषेणेतः प्राप्तो रागः प्रेमा यस्य स स्यान्न तु नष्टरागः। आत्मत्वे भूतार्थबुद्धिरिति। भूतार्थवादः भूतार्थकथनं भूतार्थबुद्धिरिति पर्यायौ किमु। प्राग् भूतार्थवादत्वमात्मत्वम्। सम्प्रति भूतार्थबुद्धित्वमात्मत्वमिति। एतस्य लेखनस्य कोऽभिप्रायः। अतश्च दीक्षितप्रदर्शिते द्वितीयतृतीये विप्रतिपत्ती स्वतः परिह्रियेते। इत्यत्र अतश्चेत्यस्य अस्माद् हेतोरित्यर्थं एव। कस्माद् हेतोरिति पृच्छ्यते। वामनमते सौन्दर्यं एव आत्मशब्दस्य भूतार्थवादत्वमिति हेतोः किम्। अथवा सौन्दर्यस्यात्मत्वे भूतार्थबुद्धिर्वामनस्येति हेतोः किम्।

दीक्षितस्य द्वितीया विप्रतिपत्तिः शास्त्रानुकूला अनुक्तस्याभ्युपगमः। अभ्युपगमशब्दार्थः स्वीकृतिः। परमयं द्विवेदी तामनुक्तप्राप्तिरिति प्रतीतां विवृत्याऽप्राप्तिप्राप्तिरिति

न्याहरति। एतच् शास्त्रस्यानुकूलत्वादपदार्थः। अभ्युपगमः प्राप्तिरिति पर्यायौ को वा वदिष्यति। सापि अप्राप्तिप्राप्तिः। अभ्युपगमः स्वीकृतिः। प्राप्तिर्लब्धिरिति सर्वाहतः पन्था॥

स्वतः परिह्रियेते। अत्र स्वतः स्वयमात्मना वा स्वस्माद्वा स्वं वा स्वस्मिन् स्वस्मै वा सार्वविभक्तिकत्वात्तसेः। दूरं नीयेते। कोऽर्थः। परिसंख्याविधिदृष्टेनेति। उभयोर्युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः। अत्र विधौ दृष्टेन वर्त्मनेत्यर्थः। अथवा विधिना दृष्टेन वर्त्मनेत्यर्थः। कोऽर्थः। तद्वर्त्म यथा पञ्च पञ्चनखा भक्ष्या इति परिसंख्याविधे-रुदाहरणम्। अत्र पञ्चनखानां तदितरेषाञ्च भक्षणे रागतः प्राप्ते। तत्र मांसाशिनः कृते उभयोर्भक्षणयोर्युगपत्प्राप्तौ पञ्चनखेतरव्यावृत्तिपरोऽयं विधिर्वर्तते। तथा वामनग्रन्थतः कयोर्द्वयोर्युगपत्प्राप्तिस्तद्वाचकैरक्षरैः। तस्यां सत्यां तदितरस्य कस्य व्यावर्त्तनं विहितं वर्त्तते। एतेन वर्त्मना इमे शक्यपरिहारे इति। प्रत्युत एते विप्रतिपत्ती न अपितु एता विप्रतिपत्तयस्तिस्रः श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनात्। प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणेत्युक्तेः। वामनाचार्यतदनुगताचार्यैः श्रुतस्यार्थस्य "रीतिः काव्यस्यात्मा" इत्येतस्य परित्यागरूपा एका एभिरश्रुतस्यार्थस्य "सौन्दर्यं काव्यस्यात्मा" इत्येतस्य प्रकल्पनारूपा अपरा, अर्थबोधनाय अपदं न प्रयुञ्जीत, अर्थात् पदं प्रयुञ्जीत। तत्रापि नैकेन पदेनार्थबोधः अपितु आकाङ्क्षादिमत्पदकदम्बकात्मकेन वाक्येन सः। तेन पदकदम्बात्मकं वाक्यमेव काव्यम्। तच्च रचनामन्तरा सम्भवत्येव नहि। तयैव जायते। अतः प्राप्तं रचनारूपा रीतिः काव्यात्मेति। एवं हि सौन्दर्यं काव्यस्यात्मेति स्वीकारेण रीतिः काव्यस्यात्मेति प्राप्तस्य बाध-रूपा तृतीया। इत्येता भवद्गले पतिताः बद्धाः। तर्हि कथमेतेन वर्त्मना शक्यपरिहारे इमे। वामनीयमतविषये विप्रतिपत्तीनां परिहारकरणसमये सामयिकाः प्रपञ्चस्य परीहारं कुर्वते। पुंसः परिग्रहश्चेति कोक्तिः। ते असामयिका न ते सामयिका इत्येव वक्तव्यम्। यतो हि यत्समये यत्कर्त्तव्यं तत्समये तत्कर्त्तव्यं परित्यज्यान्यथयन्ति।

"अत एव कालिदासः" इति किमुक्तम्। अतः अस्मात् कारणात्। अत्र किं कारणम्। यस्मादत इत्युक्तम्। कालिदासोक्तेः प्रकृते क उपयोगः। "काव्यवर्त्मनि प्राप्तस्य परिहारः अप्राप्तस्य परिग्रह" इति ब्रूते। क-ऊचे—वाच्यादतिशायिनि व्यङ्ग्ये उत्तमं काव्यम्। अनतिशायिनि तस्मिन् मध्यमं तत्। अस्फुटे तस्मिन् चित्रं तत्। शब्दार्थयुगलं काव्यमिति अर्थस्य परित्यागः क्व। अतः काव्ये उत्तममध्यमाधमत्वव्यवहारो वाच्यव्यङ्ग्ययोः सद्भाव एव भवति न तु कस्याप्येकस्य तत्र परिहारः। न चाप्राप्तस्य कस्याप्येकस्य परिग्रहः। अत्र शरीरस्येवेति एवमिवपदं वर्त्तते। तेनोपमा वर्त्तते, न दृष्टान्तः। अतः शरीरा-त्मोपमास्थले शरीरात्मदृष्टान्त इति कथनं न शोभते। शास्त्रकुक्षौ समापतितत्वेन न्यक्कृतिमिति कोक्तिः। शास्त्रजलधिरतीव गभीरः। तस्य कुक्षौ मध्ये सम्यक् आ समन्तात्पतितत्वेन गतत्वेन

च न्यक्कृतिमिति न वाच्यं शास्त्रत्रमेवेति वक्तव्यम्। रामायणम्, पुराणान्यष्टादश, महाभारतं सर्वमिदं काव्यवर्त्म। "यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" इति डिण्डिमनादः सर्वेषां प्राचामर्वाचीनानाञ्च महाभारतविषये। मीमांसकानां श्लोकवार्तिकं श्लोकैर्बद्धं रचितम्। ज्यौतिषायुर्वेदग्रन्था अपि सर्वं काव्यवर्त्मैव तत्। यथा शरीरे स्थूलत्वं सूक्ष्मत्वं विशेषणं तथा चैतन्ये आत्मा विवक्षितं किम्। अथवा ताभ्यां पृथग् आत्मचैतन्यपदम्। तस्य कोऽर्थः ? आत्मनि चैतन्यं वा। आत्मचेतननिष्ठो धर्मः कश्चन वा भावो वा कर्म वा किमपेक्ष्येदं पदमत्र प्रयुक्तं लिखितं वा।

अथ च इति यत्त्रिकं तत्त्रिकमपि आदाय शक्यसमाधिरेव शरीरात्मदृष्टान्तः। इति भवदुक्त्यनुसारं शरीरात्मपदे यदात्मपदमस्ति तस्य, आत्मचैतन्ययोर्यदात्मपदमस्ति तस्य च समानार्थकत्वं प्राप्तम्। एवं चेत्तर्हि यो गां ददाति स गोदाता यो गां विक्रीणाति स गोविक्रेता तौ समानार्थकौ। यतो गोवृत्तिस्व-स्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनफलकत्यागव्यापारानुकूल-कृतिमान् यथा दाता वर्त्तते तथा गोवृत्तिस्व-स्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनफलकत्यागानुकूल-कृतिमान् विक्रेताऽपि। शरीरात्मनोर्या स्थितिः सैव शरीरचैतन्ययोः। किमत्र देहस्य धर्म आत्मनि चैतन्ये वा आत्मनश्चैतन्यस्य वा धर्मः शरीरे इति वाञ्छति भवान्। "तथाहि जीवात्मनि" इत्यादि लोचनकारः कुत्र लिलेख। स्थलनिर्देशे कः सङ्कोचः। केवलं "प्रतीतञ्चैतच् शिल्पशास्त्रे कादम्बर्यादिषु च" इत्यादिप्रागुल्लिखितवद् गप्पाष्टकमेव। प्राणादीनामभावे यदि चैतन्य-शरीरयोरित्यत्र उपात्तस्याऽऽदिपदस्य ग्राह्यः कः। अथ च चैतन्यपदस्य कोऽर्थः। अन्यच्च पूर्वं यथा शरीरात्मदृष्टान्तेति पदं नितान्तमशुद्धमुपात्तं तथाऽधुनापि। अत्र शरीरञ्च आत्मा चेति विग्रहे अल्पाच्तरत्वात् अभ्यर्हितत्वाद् आत्मशरीरयोरित्येवमात्मशब्दस्य पूर्वनिपातेन भाव्यम्। इयमेकाऽशुद्धिः। शरीरस्येवेति वाक्यशेषः इत्यत्र इवशब्दः सादृश्यार्थकः। सादृश्यमुपमा न तु दृष्टान्तः। इति द्वितीयाऽशुद्धिः। शरीरात्मनोः, आत्मशरीरयोर्वा दृष्टान्तः। अथवा शरीरात्मानौ दृष्टान्तौ यत्र। अथवा आत्मशरीरे वा दृष्टान्तभूते इति समासनिश्चया-भावस्तृतीयाऽशुद्धिः।

"साध्यसाधनभावेन एव प्राधान्याप्राधान्यव्यवस्थापने" इति भवदक्षराणि। अत्र एवकारव्यावर्त्यः पदार्थः कः। अथ चेत् तादृशभावकरणकं तादृशव्यवस्थापनं तर्हि साध्यं जन्यं जगत्, साधनं निमित्तकारणं वा उपादानकारणं वा अभिन्ननिमित्तोपादानकारणं वा परमेश्वरः। अनयोः किं प्रधानम्। साध्यो जन्यः पुत्रः, साधनं जनकः पिता; अनयोः कः प्रधानम्। कः कस्मात् श्रेष्ठः कः सेव्यः कः सेवकः। "ग्राह्यत्वं प्रति सौन्दर्यस्यापि" अत्र भवदुक्तौ काव्यं ग्राह्यमलङ्कारादिति वामनाचार्याक्षरैः सौन्दर्यातिरिक्तस्य कस्य पदार्थस्य काव्यग्राह्यतायां साधनत्वं वर्त्तते यद्बलता "सौन्दर्यस्यापि" इत्यत्र अपि शब्दोऽरोचि। "सौन्दर्यापेक्षया

ग्राह्यत्वस्यैव प्राधान्ये" इति कोक्तिः। अपेक्षयेति तृतीयया, व्यावर्तकार्थेन एवकारेण चेदं प्राप्तं भवति यत् सौन्दर्यस्य प्राधान्यं परं सौन्दर्यापेक्षया ग्राह्यत्वस्यैव न तु सौन्दर्यस्य प्राधान्यम्। इति। यदा पूर्वं ग्राह्यत्वसौन्दर्ययोः प्राधान्याप्राधान्ये साध्यसाधन-भावेन समर्थिते अर्थात् ग्राह्यत्वस्य प्राधान्यं सौन्दर्यस्याप्राधान्यमिति यथासंख्यं क्रमेणान्वय-स्तदा सौन्दर्यस्य प्राधान्यं केन हेतुना प्राप्तं यस्य निवारणाय एवकारं निवेश्य ग्राह्यत्वस्यैव-प्राधान्यं न तु सौन्दर्यस्येत्युच्यते। अन्यच्च-तस्यैव काव्यात्मत्वप्रसक्तिरिति भवदुक्तिः। अत्र ग्राह्यत्वस्यैव प्राधान्ये तस्यैवेत्यनेन यच्छब्दस्य पूर्वपरामर्शकत्वाद् ग्राह्यत्वस्यैव काव्यात्मत्वमुक्तं भवति। ततश्च ग्राह्यं काव्यं तन्निष्ठो धर्मो ग्राह्यत्वं काव्यत्वम्। एवं काव्यत्वस्यैव काव्यात्मत्व-प्रसक्तिरिति किं वक्ति भवानिति ज्ञायते स्वेन। सखि! मे चतुरो भर्त्ता स्वलिखितं स्वं न जानाति।

"यच्चैतन्यस्य शरीरग्राह्यत्वं प्रति साधनता सर्ववादिसम्प्रतिपन्ना" इति भवदुक्तिः। अत्र पृच्छ्यते—यथा देवदत्तशरीरं तथा घटपटादिरपि शरीरं ततश्च यथा देवदत्तशरीरस्य ग्राह्यत्वं प्रति चैतन्यस्य साधनता तथा घटपटादिशरीरस्य ग्राह्यत्वे चैतन्यस्य साधनताऽस्ति किम्। घटपटादिशरीरं ग्राह्यं चैतन्यादित्येवं कश्चिदपि अनुमिनुयात्। किं घटपटादिशरीरं चेतनमस्ति। विराट्शरीरं चतुर्मुखादिशरीरं घटादिशरीरं षड्विंशतितत्त्वसङ्घातं समष्टिव्यष्ट्-यात्मकमिति योगभाष्यम्। नास्ति च तथापि चैतन्यस्याप्राधान्यन्यक्कार इति किमुच्यते। यदा तत्त्वं प्रति चैतन्यस्य साधनतयाऽप्राधान्यं सर्वैः स्वीकृतं तदा साधनतायाः स्वीकरणेऽपि अप्राधान्यस्य न्यक्कृतिरभावो नास्तीति नास्तित्वं कथं स्यात् तस्य तु साधनतया व्यवस्थापना-दस्तित्वमेवेति भवतैव प्रागुक्तम्।

अथ कल्पः। अत्र कल्प इत्यस्य कोऽर्थः। कल्पः शास्त्रे विधौ न्याये संवर्ते (प्रलये) ब्रह्मणो दिने इति हेमकोषानुसारं शास्त्रं चेत्तर्हि शास्त्रस्य रीतिरित्यारभ्य अभिमतत्वादित्यन्तं न लिखेत्। वामनशास्त्रे यदस्ति तत्सर्वसमक्षम्। तद्विरुद्धमेवात्र द्विवेदिनो लेखे प्रत्यक्षम्। विधिरपि न। अपूर्वविध्यादिषु कस्याप्यत्राभावात्। न्यायोऽपि पञ्चावयववाक्यस्वरूपो नास्ति। ब्रह्मणो दिनस्य प्रसङ्गः कः। आं प्रलयार्थो वर्त्तते। कुतः सः। वामनकृतग्रन्थस्यादर्शनादश्रवणाच्च चक्षुश्श्रोत्रयोरिन्द्रिययोः सः। तयोरप्रवर्त्तनात्तत्प्रवर्त्तकस्य मनसोऽपि सः। दुर्ग्रहस्य सत्त्वाद् बुद्धेरपि सः। बुद्धेः फलमनाग्रह इत्युक्तेः।

काव्यरीत्योः समवायमभ्युपेयुषो वामनस्येत्येवं वामनस्य सम्बन्धे मूर्खोऽपि लेखितुं न शक्यते किमुताधीती न्यायशास्त्रस्य। अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्य-विशेषयोर्यः सम्बन्धः स समवायः। प्रकृते च काव्यं कवेः कर्म क्रियैव। रीतिरपि गुणरूपविशेषवती पदानां रचना क्रियैव। एवं क्रिययोः सम्बन्धः समवायो नहि भवति। वामनाचार्यो महाविद्वान् कथमेनं सम्बन्धमनयोः समुपैष्यति। किमधिकम्—

विशेषणं विशेष्यं भोः संस्थितिं लोकशास्त्रयोः।
सम्बन्धं चाकलय्यैव नान्यथात्र लिखेलिमम्॥

# अभिनव-साहित्य-परिचयः

**१—कामधेनुः** ( हिन्दी, इङ्ग्लिश, मलयालम इति भाषात्रये निबद्धं संस्कृतभाषाशिक्षकं विशिष्टं पुस्तकम् ) ।

लेखकः—ई० पी० भरतपिशारटी, त्रयाणामपि पुस्तकानां आकारः—डिमाई, पृष्ठसंख्या ४२६ । मूल्यम्–२८ रूप्यकाणि । प्राप्तिस्थानम्–भारतविद्यापीठम्, पी० ओ० एरानेल्लूर, त्रिचूर, केरल ।

जीवनार्थमावश्यकान्यपि सर्वाणि सांसारिकाणि कार्याणि परित्यज्य बहुभ्यो वर्षेभ्यः केवलं संस्कृतप्रचार एव सर्वथा समर्पितात्मना श्रीपिशारटीमहोदयेन सरल-सुबोधरीत्या चत्वारिंशता दिवसैः संस्कृतशिक्षणाय चत्वारिंशत्पाठात्मकमिदं पुस्तकं तिसृषु भाषासूपनिबद्धम् । पुस्तकनामानुसारमेव सेयं शिक्षणरीतिः कामधेनुपद्धतिनाम्ना प्रसिद्धिं प्रापिता । लेखकेन शिक्षणीयविषयाणां चत्वारिंशति पाठेषु निम्नलिखितरूपेण विभागो विहितः—

प्रथमे पाठे पुरुष-वचन-पदभेदाः । द्वितीये विभक्तिः । तृतीये सर्वनामानि । चतुर्थे-वर्णोत्पत्तिः, स्वर-व्यञ्जन-भेदः, वर्णविकारः । पञ्चमे स्वरसन्धिः, व्यञ्जनसन्धिः, विसर्गसन्धिः । षष्ठे गणविभजनम्, कालक्रियाः, प्रकारक्रियाः, लकारपरिचयः, खिलधातवः, सार्वधातुकार्धधातुकाः । सप्तमे स्वरान्तशब्दानां विभक्तिरूपाणि । अष्टमे उपसर्गाः, कृत्प्रक्रिया, तद्धितप्रक्रिया । नवमे—लकाराः कालार्थकाः प्रकारार्थकाश्च । दशमे—व्यञ्जनान्तशब्दानां विभक्तिरूपाणि । एकादशे—सकर्मकाकर्मकभेदः, कर्मकर्तृभावप्रयोगाः, अङ्गक्रियाः, अङ्गिक्रियाः, तुमुन्-क्त्वा-ल्यप्-प्रयोगाः । द्वादशे सन्नन्ताः केवलप्रयोजकक्रियाः, सप्तम्याः प्रयोगविशेषः, पात्रीभवति, क्विबन्ताः, पारिभाषिकशब्दाः । त्रयोदशे, चतुर्दशे, पञ्चदशे च पाठे रघुवंशश्लोकानामाधारेण पदच्छेदाऽन्वयरीतिसमासादीनां शिक्षणं विस्तरेण विहितं वर्तते । अनन्तरं ३० तमपाठपर्यन्तं रघुवंशस्यैवाधारेण विविधा विषयाः प्रतिपादिता उदाहरणानि च प्रचुराणि प्रदत्तानि । ततश्च चत्वारिंशत्तमपाठपर्यन्तं रामायण–महाभारत–शाकुन्तल-कुमारसम्भव-कादम्बरी-वेदोपनिषत्प्रभृति ग्रन्थानामुदाहरणमुखेन भूयांसो विषया विवेचिताः । एवं चत्वारिंशता पाठैः पुस्तकमिदं समाप्तम् । पाठास्तथा सरलरीत्या बोधिता यथा दीर्घाणामपि तेषामवधारणं परिश्रमिणा छात्रेण अञ्जसैव कर्तुं शक्यते । आशासे, संस्कृत-शिक्षाप्रचारे पुस्तकमिदं सर्वथा सहायकं भवेत् । संस्कृतशिक्षणपद्धतिविशेषविदो विद्वांसः पुस्तकस्यास्य नूनं निरीक्षणं परीक्षणञ्च कुर्युरिति मे साग्रहं निवेदनम् ।

—वासुदेवद्विवेदी शास्त्री

सहसम्पादकः

## २—साहित्यसुधालहरी ( निबन्धसमुच्चयः )

रचयिता—श्री टी० नरसिंहाचार्यः एम० ए०, वरिष्ठ-प्रवक्ता श्रीनारसिंह-संस्कृत-कलाशाला, चिट्टिगुड्डूरु । आकारः—रायल अष्टपृष्ठात्मकम्, पृष्ठानि—१५६ । मूल्यम्—न निर्दिष्टम् ।

श्री टी० नरसिंहाचार्यमहाभागैरत्र 'पण्डितराजस्य प्रतिभावैभवम्' शीर्षके निबन्धे पण्डितराजजगन्नाथस्य चतुरस्त्रं पाण्डित्यं विस्तृतं सोद्धरणं प्रादर्शि । 'सङ्गीतमथ साहित्यम्' निबन्धे सङ्गीत-साहित्ययोः सामञ्जस्यं सङ्गमयद्भिराचार्यवर्यैः साहित्यस्य व्यापकत्वं महत्त्वञ्च प्रतिष्ठापितम् । 'वाणीं भजत गैर्वाणीम्' निबन्धे संस्कृत-भाषाया अमरभाषात्वं नूत्नपद्धत्या प्रतिपाद्य तस्याः प्रचार-प्रसारकृते नैके हेतवः साधु विवेचिताः । 'कर्त्तव्यमेव कर्त्तव्य'मित्यादिशीर्षके निबन्धे नानाविधैः पौराणिकेतिवृत्तैः कर्त्तव्यताविषयिणी चर्चा कृता । 'तासां त्वं प्रभवो गिराम्' निबन्धे विज्ञानमपेक्षमाणेन मानवेनावश्यं चतुर्दशविद्यास्थानानां ज्ञानाय प्रयतितव्यमिति विशदं न्यरूपि । 'कुलपतेः परिचयः' इति शीर्षके निबन्धे श्रीमतो वरदाचार्यमहोदयस्य चिट्टिगुड्डूरुग्रामस्थ-नरसिंहाचार्यकलाशालायाः कुलपतेर्जन्मत आरभ्याद्य यावद् वर्तमाना नानाविधाः कार्यकलापा अनितरसुलभा याथार्थ्येनोपवर्णिता यद्द्वारा तन्महोदयस्य बहुविधकार्यप्रवणत्वं परमवैदुष्यञ्च प्रत्यक्षमिवानुभूयते । 'शास्त्रिमहोदयः' नाम्नि निबन्धे श्रीवेंकटरमणशास्त्रिमहोदयस्याऽऽन्ध्र-पण्डितस्य व्यक्तित्वं कृतित्वञ्च सम्यक् प्रदर्शितम् । 'यतिपतेरागमनम्' निबन्धे जगद्गुरोः श्रीकाञ्चीकामकोटिपीठाधिपतीनां चन्द्रशेखरस्वामिनामग्रे स्वकीयं किमपि निवेदनमुपनिबद्धम् । 'आदिकविरादिकाव्यञ्चे'ति लेखे महर्षेर्वाल्मीकेस्तद्रचितरामायणस्य च महत्त्वं ख्यापयद्भि-राचार्यवर्यैः 'रामं दशरथं विद्धी' त्यादिपद्यस्यैकादशधा व्याख्योपस्थापिता । 'गद्यं कवीनां निकषं वदन्ती' त्यस्मिन्निबन्धे गद्यसाहित्यस्य गद्यकाराणाञ्च विवरणं प्रदत्तम् । 'कविकुलगुरुः कालिदासः' तथा 'महाकविर्माघः' इत्येतयोर्निबन्धयोः कालिदास-माघयोः कवित्वं बहुविध-पाण्डित्यञ्च संसाधितम् ।

वस्तुतोऽस्मिन् नानाविषयक-निबन्धानां सङ्ग्रहात्मके ग्रन्थे आचार्यमहोदयैर्निबन्ध-लेखनस्य प्रौढा सुगमा च पद्धतिर्निदर्शिता । सत्यमेवात्र शब्दार्थरूपस्य साहित्यस्य सुधा प्रवाहिता । अध्ययनशीलैश्छात्रैः सदयहृदयैः सहृदयैश्चापि ग्रन्थोऽयमवश्यमेवावलोकनीयः सङ्ग्राह्यश्चास्ति ।

## ३—मयूखदूतम्

रचयिता—प्रो० रामाशीषपाण्डेयः—अध्यक्षः—संस्कृतविभागस्य, मारवाड़ी महाविद्यालयः, रांची । प्रकाशकः—श्याम प्रकाशन, जैतीपुर, तेलहाड़ा, नालन्दा, बिहार । आकारः—डबलक्राउन । पृष्ठानि—५६ । मूल्यम्—२.५० ।

एकाधिकशतसंख्याकेषु मन्दाक्रान्ताछन्दःसूपनिबद्धेऽस्मिन् दूतकाव्ये शोधकार्यार्थमिङ्ग्लैण्डदेशं गतस्य पुनरागतस्य भारतवर्षे विहारप्रदेशीयराँचीनगरस्थस्य कस्यचिदनुसन्धातुर्विदुषस्तत्रत्यया कयाचन सुन्दर्या प्रेमपाशे बद्धस्य मयूखमेव दूतं विधाय तत्र गमनाय मार्गं सन्देशवार्ताश्च निर्दिशतः प्रसादगुणगुम्फितया समलङ्कृतया च संस्कृतगिरा विप्रलम्भशृङ्गाररसः साधु प्रस्तुतः पाण्डेयमहाभागेन। मेघदूतस्य भाव-भाषाभ्यां प्रभावितमपीदं खण्डकाव्यमाधुनिकतायाः सन्निवेशादभिनव-नानाभावसमावेशात्तथा प्रेमतत्त्वस्य मनोवैज्ञानिकरीत्या विश्लेषणाद् दूतकाव्यपरम्परायाः पुनरुज्जीवनप्रदायकमिव प्रतिभाति। पटना-काशी-प्रयाग-दिल्ली-कराँची-यूनान-पेरिसप्रभृति-नगरीणां स्वाभाविकी वर्णना नितरां हृदयावर्जिका विद्यते। काव्यरसिकैः काव्यमिदमवश्यमेवाऽऽस्वादनीयम्।

## ४—शौरिशौर्यम् (नाटकम्)

लेखकः—विद्वान् जग्गु शिङ्गरार्यः। प्रकाशकः—सुरभारतीप्रकाशनम् बेङ्गलूरु। आकारः—डबलक्राउन। पृष्ठानि—४८। मूल्यम्—२.००।

पञ्चाङ्कात्मके लघुकायेऽस्मिन्नाटके भगवतः श्रीकृष्णस्य बाल्यावस्थायाः शौर्यचेष्टितानि सरलया सहजया प्रवाहमय्या च भाषया समुपनिबद्धानि। इतिवृत्तञ्चास्य भागवतादिग्रन्थेषु यत्प्रथितं तदेव किन्तु यत्र-तत्र स्वप्रतिभया किञ्चित् परिवर्तनं परिवर्धनं च व्यधायि। नाटकमिदं शैल्या भासकवेर्बालचरितनाटकं स्मारयति। वीररसस्य प्राधान्येऽपि हास्यादीनां यथास्थानं सन्निवेशो हृदयावर्जकतां समेधयति। अभिनवैर्नाटककारैर्नाटकमिदमवलोकनीयं सङ्ग्राह्यञ्चास्ति।

—विद्याधरद्विवेदी

★

## समीक्षणार्थं प्राप्तानि पुस्तकानि

१—कादम्बरीशतकम्
२—संस्कृतमहाकविदिव्योपाख्यानम्
३—महर्षिदयानन्दप्रशस्तिशतकम्
४—सगुणब्रह्म-स्तुतिशतकम
५—शिवशतकम्
६—शिवप्रतापविरुदावली
७—इन्दिराविजयवैजयन्ती ( पद्यबद्धा )
८—षड्दर्शनसिद्धान्तप्रक्रियाऽद्वैतवादश्च
९—एकभारतम् ( नाटकम् )
१०—प्लवङ्गदूतम् ( खण्डकाव्यम् )
११—रस-कौस्तुभ ( हिन्द्याम् )
१२—मेघदूत ( भोजपुर्यामनुवादः )
१३—सनत्सुजातीयम्
१४—हरियाणा-वैभवम् ( लघुकाव्यम् )
१५—विचार और विवेचन (निबन्धसंग्रहः, हिन्द्याम्)
१६—रामावतार गाथा ( हिन्द्याम् )

★

भारतस्य प्रतिष्ठे द्वे
संस्कृतं संस्कृतिस्तथा

*

---

निखिलेऽपि भूमण्डले
संस्कृतभाषा-साहित्य-प्रसाराय
भारत लक्ष्मी ट्रेडिंग कम्पनी
प्राइवेट लिमिटेड, कलकत्ता

*

इति संस्थानेन श्रद्धाभक्तिप्रसूनानि विनिवेद्यन्ते

---

# नान्यः पन्था विद्यतेऽयनाय

(१)

ॐ अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ।।

(२)

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।।

(३)

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ।।

(४)

यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ।।

(५)

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ।।

(६)

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे
नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण
सर्वलोकं म इषाण ।।

यजुर्वेदात्—३१—१७—२२